विकर्तनार्कमार्तण्डमिहिरारुणपूषणः २०३
द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः २०४
विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः २०५
भानुर्हंसः सहस्रांशुस्तपनः सविता रविः २०६
'पद्माक्षस्तेजसां राशिश्छायानाथस्तमिस्रहा **
कर्मसाक्षी जगच्चक्षुर्लोकबन्धुस्त्रयीतनुः **
प्रद्योतनो दिनमणिः खद्योतो लोकबान्धवः **
इनो भगो धामनिधिश्चांशुमाल्यब्जिनीपतिः' **
माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्वकाः २०७
सूरसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः २०८
परिवेषस्तु परिधिरुपसूर्यकमण्डले २०९
किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः २१०
भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् २११

---

उष्णरश्मिः, विकर्तनः, अर्कः, मार्तण्डः, मिहिरः, अरुणः, पूषा, द्युमणिः, तरणिः, मित्रः, चित्रभानुः, विरोचनः, विभावसुः, ग्रहपतिः, त्विषांपतिः, अहर्पतिः, भानुः, हंसः, सहस्रांशुः, तपनः, सविता, रविः ३७ सूर्यका. ॥—माठरः, पिङ्गलः, दण्डः, ३ सूर्यकापार्श्ववर्ति देवताका.=परितः पार्श्वे विद्यमानाः । ( 'शक्रोऽस्य वामपार्श्वे तु दण्डाख्यो दण्डनायकः । वह्निस्तु दक्षिणे पार्श्वे पिङ्गलो वामभागतः । यमोऽपि दक्षिणे पार्श्वे भवेन्माठरसंज्ञया' ) ॥—सूरसूतः, अरुणः, अनूरुः, काश्यपिः, गरुडाग्रजः ५ सूर्यकासारथिका. ॥—परिवेषः, परिधिः, उपसूर्यकम्, मण्डलम् , ४ सूर्य तथा चन्द्रमाका चारैतर्फ देखिने मण्डलका. ॥ किरणः, उस्रः, मयूखः, अंशुः, गभस्तिः, घृणिः, रश्मिः, भानुः, करः, मरीचिः, दीधितिः,

स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः २१२
रोचिः शोचिरुभे क्लीबे प्रकाशो द्योत आतपः २१३
कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति २१४
तिग्मं तीक्ष्णं खरं तद्वन्मृगतृष्णा मरीचिका २१५

इति दिग्वर्गः  ७. अथ कालवर्गः

कालो दिष्टोऽप्यनेहापि समयोऽप्यथ पक्षतिः २१६
प्रतिपद्द्वे इमे स्त्रीत्वे तदाद्यास्तिथयो द्वयोः २१७
घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ २१८
प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि २१९
'व्युष्टं विभातं द्वे क्लीबे पुंसि गोसर्ग इष्यते' **
प्रभातं च दिनान्ते तु सायं संध्या पितृप्रसूः २२०
प्राह्णापराह्णमध्याह्नास्त्रिसंध्यमथ शर्वरी २२१
निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा २२२

---

११ किरणका. ॥—प्रभा, रुक्, रुचिः, त्विट्, भा, भाः, छविः, द्युतिः, दीप्तिः, रोचिः, शोचिः, ११ प्रभा तेजमात्रका ॥—प्रकाशः, द्योतः, आतपः, ३ सूर्यप्रभाका (घामका) ॥—कोष्णम्, कवोष्णम्, मन्दोष्णम्, कदुष्णम्, ४ मन्तातताका. ॥—तिग्मम्, तीक्ष्णम्, खरम् ३ अत्यन्ततताता ॥—मृगतृष्णा, मरीचिका, २ मृगतृष्णाका. ॥—मरुदेशादौ सिकतासु प्रतिच्छुरिताः सूर्यकिरणा जलाकारेण भान्ति तस्य; जलाभासस्य ॥ बालुमा जलाभास हुनु ॥

२१६-२७७. कालः, दिष्टः, अनेहा, समयः ४ कालका. ॥—पक्षतिः, प्रतिपत् २ प्रतिपदाका. ॥—घस्रः, दिनम्, अहः, दिवसः, वासरः ५ दिनका. ॥ प्रत्यूषः, अहर्मुखम्, कल्यम्, उषः, प्रत्युषः, प्रभातम् ६ प्रातकालका. ॥—दिनान्तः, सायं, संध्या, पितृप्रसूः ४ सायंकालका. । प्राह्णः, अपराह्णः, मध्याह्नः, ३ दिनका १ भाग ३ भाग २ भागका ॥ त्रिसंध्यं समयसमूहका ॥ ३ भागका ॥ शर्वरी, निशा, निशीथिनी, रात्रिः, त्रियामा, क्षणदा, क्षपा, विभावरी, तमस्विनी,

विभावरीतमस्विन्यौ रजनी यामिनी तमी २२३
तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चन्द्रिकयान्विता २२४
आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी २२५
गणरात्रं निशा बह्व्यः प्रदोषो रजनीमुखम् २२६
अर्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ २२७
स पर्वसंधिः प्रतिपत्पञ्चदश्योर्यदन्तरम् २२८
पक्षान्तौ पञ्चदश्यौ द्वे पौर्णमासी तु पूर्णिमा २२९
कलाहीने सानुमतिः पूर्णे राका निशाकरे २३०
अमावास्या त्वमावस्या दर्शः सूर्येन्दुसंगमः २३१
सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः २३२
उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च २३३
सोपप्लवोपरक्तौ द्वावग्न्युत्पात उपाहितः २३४

---

रजनी, यामिनी, तमी १२ रात्रिका नाम॥ तमिस्रा १ अँधेरिया रातको॥ ज्यौत्स्नी उजेलिया रातको ॥ पक्षिणी १ आगामी व्यतीतदिन युक्त रात्रिका ॥ गणरात्रं १ रात्रिसमूहको॥–प्रदोषः, रजनीमुखम् २ सन्ध्याका ॥–अर्धरात्रः, निशीथः २ मध्यरातका ॥—यामः, प्रहरः २ प्रहरका ॥ पर्व १ प्रतिपदा पूर्णिमाका संधिका ॥ पक्षान्तौ पञ्चदश्यौ २ अमावास्या र पूर्णिमाका ॥—पौर्णमासी, पूर्णिमा, २ पूर्णिमाका. ॥ सैव पूर्णिमा पूर्णे निशाकरे सति १ पूर्ण चन्द्रमा भयेकी पूर्णिमाको राका १ ॥—अमावास्या, अमावस्या, दर्शः, सूर्येन्दुसंगमः ४ कृष्णपक्षकी अमावस्याका. ॥—सा अमावास्या दृष्टेन्दुश्चेत् दृष्ट इन्दुर्यस्यां सा सिनीवाली १ चन्द्रमा देखिने औंसीका. ॥—सैव नष्टेन्दुकला नष्टा इन्दुकला यस्यां सा कुहूः १ चन्द्रमा नदेखिने औंसीका. ॥—उपरागः, ग्रहः २ ॥ सूर्यचन्द्र ग्रहणका नाम ॥–सोपप्लवः, उपरक्तः २ राहुलेग्रासगरेका बेलाका सूर्यचन्द्रका ॥ अग्न्युत्पातः, उपाहितः २ धूमकेतुआदि उत्पातका.॥

एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ २३५
अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला २३६
तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम् २३७
ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च २३८
पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ २३९
द्वौ द्वौ मार्गादिमासौ स्यादृतुस्तैरयनं त्रिभिः २४०
अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः २४१
समरात्रिंदिवे काले विषुवद्विषुवं च तत् २४२
'पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा **
नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे' **

---

एकयोक्त्याऽपृथग्वचनेन पुष्पवन्तौ १ एक बार उच्चारण गरियेका चन्द्रसूर्य दुवैको ।।—निमेषोऽक्षिस्पन्दकालः १ निमेषको ।। अष्टादश निमेषामिलित्वैका काष्ठा १ काष्ठाको नाम ।। त्रिंशत्काष्ठा मिलित्वैका कला १ कलाको नाम ।। ताः कलास्त्रिंशन्मिलित्वैकः क्षणः १ क्षणको नाम ।। ते क्षणः द्वादश मिलित्वैको मुहूर्तः मुहूर्तको ।। पुं.,नपुं.माछ । ते त्रिंशन्मुहूर्ता एकः १ अहोरात्रको नाम ।। तेऽहोरात्राः पञ्चदशसंख्याका एकः पक्षः १ पक्षको नाम ।। पक्षो द्विविधः शुक्लः १ शुक्लःपक्षको नाम ।। कृष्णः १ कृष्णपक्षको नाम ।। मास १ महिनाको नाम ।। मार्गादि द्वौ द्वौ मासौ ऋतुः १ ऋतुको नाम ।। स च हेमन्तादिसंज्ञः । तै ऋतुभिस्त्रिभिरेकम् अयनम् १ अयनको ।। सूर्यगतिभेदात् तद्द्विविधा—अर्कस्योदग्गतिः, उत्तरायणम् १ उत्तरायणको नाम ।। दक्षिणगतिस्तु दक्षिणायनम् १ दक्षिणायनको । एवं द्वे अयने एको वत्सरः १ वर्षको ।।—विषुवत्, विषुवम्, समं रात्रिंदिवं यस्मिंस्तस्मिन्काले । तुलासंक्रान्तौ मेषसंक्रान्तौ च दिनरात्री समे भवतस्तस्य कालस्य २ तुलासंक्रान्तिः २ मेषसंक्रान्तिका. ।।—मार्गशीर्षः,

मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः २४३
पौषे तैषसहस्यौ द्वौ तपा माघेऽथ फाल्गुने २४४
स्यात्तपस्यः फाल्गुनिकः स्याच्चैत्रे चैत्रिको मधु २४५
वैशाखे माधवो राधो ज्येष्ठे शुक्रः शुचिस्त्वयम् २४६
आषाढे श्रावणे तु स्यान्नभाः श्रावणिकश्च सः २४७
स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः २४८
स्यादाश्विन इषोऽप्याश्वयुजोऽपि स्यात्तु कार्तिके २४९
बाहुलोर्जौ कार्तिकिको हेमन्तः शिशिरोऽस्त्रियाम् २५०
वसन्ते पुष्पसमयः सुरभिर्ग्रीष्म उष्मकः २५१
निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः २५२
स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत्स्त्रियाम् २५३

---

सहाः । मार्गः, आग्रहायणिकः ४ मुङ्सीरमहिनाका ॥—पौषः, तैषः, सहस्यः ३ पौष महिनाका. ॥—तपाः, माघः २ माघ महिनाका. ॥—फाल्गुनः, तपस्यः, फाल्गुनिकः ३ फाल्गुन महिनाका. ॥—चैत्रः, चैत्रिकः, मधुः ३ चैत्र महिनाका. ॥—वैशाखः, माधवः, राधः ३ वैशाख महिनाका. ॥ ज्येष्ठः, शुक्रः २ ज्येष्ठ महिनाका. ॥—शुचिः, आषाढः २ आषाढ महिनाका. ॥—श्रावणः, नभाः, श्रावणिकः ३ श्रावण महिनाका. ॥—नभस्यः, प्रौष्ठपदः, भाद्रः, भाद्रपदः ४ भाद्र महिनाका. ॥—आश्विनः, इषः, आश्वयुजः, ३ आश्विन महिनाका ॥ कार्तिकः, बाहुलः, ऊर्जः, कार्तिकिकः, ४ कार्तिक महिनाका ॥—हेमन्त १ हेमन्त ऋतुको ॥—शिशिरः १ शिशिर ऋतुको ॥ यो पुंनपुंसकलिङ्गमाछ ॥-वसन्तः, पुष्पसमयः, सुरभिः ३ वसन्त ऋतुका. ॥ ग्रीष्मः, उष्मकः, निदाघः, उष्णोपगमः, उष्णः, ऊष्मागमः, तपः, ७ ग्रीष्म ऋतुका. । 'तप' अकारान्तः पुंलिङ्गमाछ ।।-प्रावृट्, वर्षाः, २ वर्षा ऋतुका ॥ तत्र 'प्रावृट्'

षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात् २५४
संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः २५५
मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः २५६
दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणाम् २५७
मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः २५८
संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि २५९
अस्त्री पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मषम् २६०
कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम् २६१
स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः २६२

---

शब्दः षान्तः त्रिलिङ्गमाछ। 'वर्षा'शब्दस्तु स्त्रीलिङ्गो भूम्नि नित्यं बहुवचनान्तः छ। शरत् १ शरदृतुको ॥—इ हेमन्तादि ६ ऋतुको मुङ्सरि पौष हेमन्तः ऋतु यस्तैप्रकारले २ मैनाको १ ऋतु हुन्छन् स्वयं जान्नु ॥ संवत्सरः, वत्सरः, अब्दः, हायनः, शरत्, समाः, इ ६ वर्षका नाम ॥ 'समाः' स्त्रियां बहुत्वे च ॥—पैत्रोऽहोरात्रः मनुष्यका १ महिनाको पितृको १ अहोरात्र हुन्छ ॥—तथा मानुषेण वर्षेण दैवतो देवतानामहोरात्रः मनुष्यका १ वर्षको देवताको १ अहोरात्र हुन्छ ॥—मानुषाणां यत्कृतानि युगचतुष्टयं तद्दैवं युगं ज्ञेयम्। मनुष्यका सत्य त्रेता द्वापर कलि ४ युगको देवताको १ युग हुन्छ ॥ एवं दैवे द्वे युगसहस्रे ब्रह्मणोऽहोरात्रः देवताको २००० युगको ब्रह्माजीको १ अहोरात्र हुन्छ ॥ ये द्वे दैवे युगसहस्रे तौ ॥ देवताका २ हजार युगको मनुष्यका २ कल्प हुन्छन् ॥ दिव्यानां युगानां या एकसप्ततिरेकाधिका सप्ततिस्तत् मन्वन्तरम् देवताका ७१ युगको मनुष्यको १ मन्वन्तर हुन्छ ॥—संवर्तः, प्रलयः। कल्पः, क्षयः, कल्पान्तः, इ ५ प्रलयका नाम ॥-पङ्कम्, पाप्मा, पापम्, किल्बिषम्, कल्मषम्, कलुषम्, वृजिनम्, एनः, अघम्, अंहः, दुरितम्, १२ पापका। यस्मा 'पङ्कम्' स्त्रीलिङ्ग र पुंलिङ्गमाछ। 'पाप्मा' नकारान्तः पुंलिङ्ग। बाकि नपुंसकमा ॥-धर्मम्, पुण्यम्, श्रेयः, सुकृतम्, वृषः, ५ धर्मका।

मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः २६३
स्यादानन्दथुरानन्दः शर्मसातसुखानि च २६४
श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् २६५
भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम् २६६
शस्तं चाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च २६७
मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ २६८
प्रशस्तवाचकान्यमून्ययः शुभावहो विधिः २६९
दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः १७०
हेतुर्ना कारणं बीजं निदानं त्वादिकारणम् २७१
क्षेत्रज्ञ आत्मा पुरुषः प्रधानं प्रकृतिः स्त्रियाम् २७२

---

तत्र 'धर्मः' अस्त्रियां क्लीब-पुंसोः । वृषः पुंसि ॥—मुत्, प्रीतिः, प्रमदः, हर्षः, प्रमोदः, आमोदः, संमदः, आनन्दथुः, आनन्दः, शर्मः, सातम्, सुखम्, १२ हर्षका । तत्र प्रीतिसाहचर्यान्मुदपि स्त्रियां दकारान्तः ॥—श्वःश्रेयसम्, शिवम्, भद्रम्, कल्याणम्, मङ्गलम्, शुभम्, भावुकम्, भविकम्, भव्यम्, कुशलम्, क्षेमम्, शस्तम्, १२ कल्याणका । तत्र 'क्षेमम्' 'शस्तम्' च पुं-नपुंसकयोः । पापपुण्यशब्दा तथा सुखादिशब्दाः श्वः, श्रेयः, शिवभद्रादयः, शस्तान्ता द्रव्ये विशेष्ये वर्तमानास्त्रिषु । यथा—'पापा स्त्री', 'पापः पुमान्' 'पापं कुलम्' इत्यादि जान्नु । मतल्लिका, मचर्चिका, प्रकाण्डम्, उद्धः, तल्लजः ५ असलका । एते तु पञ्च नित्यं द्रव्य एव लिङ्गान्तरेण सामानाधिकरण्येऽपि स्वलिङ्गं न जहाति । यथा—प्रशस्तो ब्राह्मणः-ब्राह्मणमतल्लिका, प्रशस्ता गौः-गोमचर्चिका, गोप्रकाण्डम्, ब्राह्मणोद्धः, कुमारीतल्लजः, इत्यादि जान्नु ॥–अयः शुभावहो विधिः १ । शुभोत्पादक दैवको ॥—दैवम्, दिष्टम्, भागधेयम्, भाग्यम्, नियतिः, विधिः, ६ भाग्यका । 'नियतिः' स्त्री. । 'विधिः' पुं० ॥–हेतुः, कारणम्, बीजम्, ३ कारणका । 'हेतुः' ना पुंलिङ्ग छ ॥—आदिकारणम्, निदानम्, २ मुख्य कारणका ॥—क्षेत्रज्ञः, आत्मा, पुरुषः, ३ आत्माका ॥—प्रधानम्, प्रकृतिः,

विशेषः कालिकोऽवस्था गुणाः सत्त्वं रजस्तमः २७३
जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः २७४
प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः २७५
जातिर्जातं च सामान्यं व्यक्तिस्तु पृथगात्मता २७६
चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः २७७

इति कालवर्गः ॥  ८. अथ धीवर्गः—

बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः २७८
प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः २७९
धीर्धारणावती मेधा संकल्पः कर्म मानसम् २८०
'अवधानं समाधानं प्रणिधानं तथैव च' ❀❀
चित्ताभोगो मनस्कारश्चर्चा संख्या विचारणा २८१

---

२ सत्त्वादिगुणसाम्यावस्थाकी प्रकृति ( माया ) का ॥—यः कालिको विशेषः कालकृतो देहादेर्विशेषो यौवनादिः सा अवस्था २ (उमेर) का नाम ॥ सत्त्वम्, रजः, तमः ३ प्रकृतिका धर्म सत्वरजःतमका ॥ तत्र रजस्तमसी सान्ते ॥ जनुः, जननम्, जन्म, जनिः, उत्पत्तिः, उद्भवः, ६ जन्मका ॥—प्राणी, चेतनः, जन्मी, जन्तुः, जन्युः, शरीरी ६ प्राणिका ॥—जातिः, जातम्, सामान्यम्, ३ घटत्वादि ब्राह्मणत्वादि जातिका. ॥—व्यक्तिः, पृथगात्मता, २ घटादि-जातिमान् व्यक्तिका. ॥—चित्तम्, चेतः, हृदयम्, स्वान्तम्, हृत्, मानसम्, मनः, ७ चित्तका ॥—

२७८-३११. बुद्धिः, मनीषा, धिषणाः, धीः, प्रज्ञा, शेमुषी, मतिः, प्रेक्षा, उपलब्धिः, चित्, संवित्, प्रतिपत्, ज्ञप्तिः, चेतना, १४ बुद्धिका ॥—या धारणा-वती धीः सा मेधा १ स्फुर्तिली ( फूर्ति ) भयेकी बुद्धिका. ॥—यन्मानसं कर्म मनोव्यापारः स संकल्पः १ संकल्पका ॥—चित्ताभोगः, मनस्कारः, २ सुखादिको

'विमर्शो भावना चैव वासना च निगद्यते' **
अध्याहारस्तर्क ऊहो विचिकित्सा तु संशयः २८२
संदेहद्वापरौ चाथ समौ निर्णयनिश्चयौ २८३
मिथ्यादृष्टिर्नास्तिकता व्यापादो द्रोहचिन्तनम् २८४
समौ सिद्धान्तराद्धान्तौ भ्रान्तिर्मिथ्यामतिर्भ्रमः २८५
संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः २८६
अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः २८७
मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः २८८
मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् २८९
मोक्षोऽपवर्गोऽथाज्ञानमविद्याहंमतिः स्त्रियाम् २९०
रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी २९१

---

मनसुबाका ॥—चर्चा, संख्या, विचारणा, ३ प्रमाणले अर्थ विचारगर्नाका ॥ अध्याहारः, तर्कः, ऊहः ३ तर्कका. ॥—विचिकित्सा, संशयः, संदेहः, द्वापरः, ४ संशयज्ञानका. ॥—निर्णयः, निश्चयः, २ निश्चयज्ञानका. ॥—मिथ्यादृष्टिः, नास्तिकता, २ परलोकछैन भन्ने नास्तिकपनाका. ॥—व्यापादः, द्रोहचिन्तनम्, २ आर्काका उपरद्रोहचिताउनका. ॥—सिद्धान्तः, राद्धान्तः, २ सिद्धान्तका. ॥—भ्रान्तिः, मिथ्यामतिः, भ्रमः, ३ अयथार्थज्ञान, ( भ्रान्ति )का. ॥—संवित्, आगूः, प्रतिज्ञानम्, नियमः, आश्रवः, संश्रवः, अङ्गीकारः, अभ्युपगमः, प्रतिश्रवः, समाधिः, १० प्रतीज्ञाका. ॥—आगूर्वधूवत् ॥—मोक्षविषये या धीर्बुद्धिस्तज्ज्ञानम् १ मुक्तिविषयक ब्रह्मज्ञानको. ॥—मोक्षशास्त्रादन्यत्र शास्त्रे शिल्पे चित्रादौ च धीर्विज्ञानं १ ॥ शिल्पशास्त्रविषयकज्ञानको. ॥—मुक्तिः, कैवल्यम्, निर्वाणम्, श्रेयः, निःश्रेयसम्, अमृतम्, मोक्षः, अपवर्गः, ८ मोक्षका. ॥—अज्ञानम्, अविद्या, अहंमतिः, ३ अज्ञानका सांसारिक कारणका. ॥—रूपम्, शब्दः, गन्धः, रसः, स्पर्शः, ५

गोचरा इन्द्रियार्थाश्च हृषीकं विषयीन्द्रियम् २९२
कर्मेन्द्रियं तु पाय्वादि मनोनेत्रादि धीन्द्रियम् २९३
तुवरस्तु कषायोऽस्त्री मधुरो लवणः कटुः २९४
तिक्तोऽम्लश्च रसाः पुंसि तद्वत्सु षडमी त्रिषु २९५
विमर्दोत्थे परिमलो गन्धे जनमनोहरे २९६
आमोदः सोऽतिनिर्हारी वाच्यलिङ्गत्वमागुणात् २९७
समाकर्षी तु निर्हारी सुरभिर्घ्राणतर्पणः २९८
इष्टगन्धः सुगन्धिः स्यादामोदी मुखवासनः २९९
पूतिगन्धिस्तु दुर्गन्धो विस्रं स्यादामगन्धि यत् ३००

---

चक्षुरादि ५ ज्ञानेन्द्रियका ५ विषयका ॥ गोचरा, इन्द्रियार्था, २ इ पनि विषयनै हुन् ॥–हृषीकम्, विषयि, इन्द्रियम्, ३ चक्षु आदि इन्द्रियका. ॥—पाय्वादि ५ पायूपस्थादि कर्मेन्द्रियका ॥ आदिना वागादि। ( 'पायूपस्थं पाणि-पादौ वाक् चेतोन्द्रियसंग्रहः । उत्सर्गआनन्दादानगत्यालापाश्च तत्क्रिया, इनका क्रियाका. ॥—मनोनेत्रादि ज्ञानेन्द्रिय ५ का. ॥—आदिना श्रोत्रादि लिनु। ( 'मनो कर्णस्तथा नेत्रं रसना च त्वचा सह। नासिका चेति षट् तानि धीन्द्रियाणि प्रचक्षते') ज्ञानेन्द्रियका. ॥—तुवरः, कषायः, २ टर्राका ॥ मधुरः, लवणः, कटुः, तिक्तः, अम्लः, ५ गुलिया नूनिला पीरा तीता अमिला ५ का ५ नाम जान्नु ॥ अमी तुवराद्याः षडपि रसमात्रे वर्तमानाः, पुंसि। तद्वत्सु रसवत्सु वर्तमानास्त्रिषु, वाच्यलिङ्गा ॥—विमर्दोत्थे संघर्षणादिनोत्पन्ने जनमनोहरे गन्धे परिमल १ माडदा आउने सुगन्धको. ॥ आमोद १ मन हरण गर्ने सुगन्धको ॥—इतः परम् आगुणात् 'गुणे शुक्लादयः' ( ३११ ) वक्ष्य-माणाद्गुणशब्दात्प्राग्वाच्यलिङ्गत्वमभिधेयानुसारेण त्रिलिङ्गत्वम् त्रिलिङ्ग जान्नु ॥—समाकर्षी, निर्हारी, २ टाढासम्मपुग्ने सुगन्धका. ॥—सुरभिः, घ्राणतर्पणः, इष्टगन्धः, सुगन्धिः, ४ शोभन साधारण गन्धका. ॥—आमोदी,

शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः ३०१
अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः ३०२
हरिणः पाण्डुरः पाण्डुरीषत्पाण्डुस्तु धूसरः ३०३
कृष्णे नीलासितश्यामकालश्यामलमेचकाः ३०४
पीतो गौरो हरिद्राभः पालाशो हरितो हरित् ३०५
लोहितो रोहितो रक्तः शोणः कोकनदच्छविः ३०६
अव्यक्तरागस्त्वरुणः श्वेतरक्तस्तु पाटलः ३०७
श्यावः स्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते ३०८
कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ ३०९
चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे ३१०

---

मुखवासनः, २ मुखलाई सुगन्धितगराउने ताम्बुलादि द्रव्यका ॥—पूतिगन्धिः, दुर्गन्धः, २ दुर्गन्धका ॥—यदामगन्धि तद्विस्रम् । १ काँचो सड़ेको दुर्गन्धिको ॥—शुक्लः, शुभ्रः, शुचिः श्वेतः, विशदः, श्येतः, पाण्डरः, अवदातः, सितः, गौरः, [ अवलक्षः ] वलक्षः, धवलः, अर्जुनः, हरिणः, पाण्डुरः, पाण्डुः, १६ सेतावर्णका. ॥—ईषत्पाण्डुः, धूसरः, २ फिका सेतापहेलाका ॥—कृष्णः, नीलः, असितः, श्यामः, कालः, श्यामलः, मेचकः, ७ काला वर्णका. ॥—पीतः, गौरः, हरिद्राभः, ३ पहेलोवर्णका. ॥—पालाशः, हरितः, हरित्, ३ हरियाका. ॥—लोहितः, रोहितः, रक्तः, ३ रातावर्णका. ॥—यः कोकनदच्छवो रक्तोत्पलाभः स शोणः १ फिकाराताको ॥—योऽव्यक्तराग ईषद्रक्तः अरुणः १ अलि अलि राताको ॥ यः श्वेतमिश्रो रक्तः स पाटल १ सेतो मिलेको राताको ॥—श्यावः, कपिशः, २ कालोपहेलाका. ॥—धूम्रः, धूमलः, कृष्णलोहितः, ३ रातोरकालो मिलेका वर्णका. ॥—कडारः, कपिलः, पिङ्गः, पिशङ्गः, कद्रुः, पिङ्गलः, ६ कैला वर्णका. ॥—चित्रम्, किर्मीरः, कल्माषः

गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति　３११

इति धीवर्गः ॥　　९. अथ शब्दादिवर्गः

ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती　३१२
व्याहार उक्तिर्लपितं भाषितं वचनं वचः　३१३
अपभ्रंशोऽपशब्दः स्याच्छास्त्रे शब्दस्तु वाचकः　३१४
तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता　३१५
श्रुतिः स्त्री वेद आम्नायस्त्रयी धर्मस्तु तद्विधिः　३१६
स्त्रियामृक्सामयजुषी इति वेदास्त्रयस्त्रयी　३१७

---

शबलः, एतः, कर्बुरः ६ छिर्विरेका चित्रविचित्रनानाप्रकारका ॥—शुक्लादयो गुणे गुणमात्रे वर्तमानाः पुंसि, यथा—'अस्य पटस्य शुक्लं रूपम्'। तद्वति गुणवति वस्तुनि वर्तमाना गुणिलिङ्गा अभिधेयलिङ्गाः। यथा—'शुक्ला शाटीः' 'शुक्लः पटः, 'शुक्लं वस्त्रम्'। रोहितादीनां स्त्रीत्वे तु—'श्येनी श्येता, रोहिणी रोहिता, लोहिनी लोहिता' इत्यादि जान्नु ॥

३१२–३६२. ब्राह्मी, भारती, भाषा, गीः, वाक्, वाणी, सरस्वती, व्यवहारः, उक्तिः, लपितम्, भाषितम्, वचनम्, वचः, १३ सरस्वतीका र वचनका ॥—अपभ्रष्टः, शब्दः 'गावी, गोणी' इत्याद्यपशब्दः, अपभ्रंश २ अशुद्धशब्दका ॥—शास्त्रे व्याकरणादौ यो वाचकः स शब्द १ शुद्धशब्दको यथा—ओतप्रोततन्तूनां वाचकः पटः इत्यादि जान्नु। तिङ्सुबन्तचयः तिङन्त-सुबन्तपदसमूहः १ वाक्यको। तिङन्तचयो यथा—'पचति भवति'। सुबन्तचयो यथा—'प्रकृतिसिद्धमिदं हि महात्मनाम्' इत्यादि जान्नु—कारकान्विता कारकैः संबद्धा क्रिया वाक्यं १ कारकयुक्तवाक्यको ॥ यथा—'देवदत्त ! गामभिरक्ष शुक्लदण्डेन' इत्यादि जान्नु ॥ श्रुतिः, वेदः, आम्नायः, त्रयी, ४ वेदका ॥ तद्विधिर्वैदिको विधिर्यागादिर्धर्म १ वेदविहितकर्मको ॥ ऋक् १ ऋक्वेदको ॥ साम १ सामवेदको ॥ यजुः १ यजुर्वेदको ॥ वेदा मिलितास्त्रयी १ तिनैवेदलाई भन्दाको

शिक्षेत्यादि श्रुतेरङ्गमोंकारप्रणवौ समौ ३१८
इतिहासः पुरावृत्तमुदात्ताद्यास्त्रयः स्वराः ३१९
आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः ३२०
आख्यायिकोपलब्धार्था पुराणं पञ्चलक्षणम् ३२१
प्रबन्धकल्पना कथा प्रवह्लिका प्रहेलिका ३२२
स्मृतिस्तु धर्मसंहिता समाहृतिस्तु संग्रहः ३२३
समस्या तु समासार्था किंवदन्ती जनश्रुतिः ३२४

---

नाम ॥ 'ऋक्'शब्दः, स्त्रीलिङ्गः जान्नु ॥—शिक्षेत्यादि श्रुतेर्वेदस्याङ्गं १ शिक्षा, कल्प, व्याकरण, निरुक्त, ज्योतिष, छन्दः ६ वेदका अङ्गको नाम ॥ शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः । छन्दोविचितिरित्येष षडङ्गो वेद उच्यते ॥ इत्यादि जान्नु ॥—ओंकारः, प्रणवः २ ॐ कारका ॥ इतिहासः, पुरावृत्तम् २ इतिहास महाभारतादिका ॥—उदात्ताद्यास्त्रयः स्वराः ३ स्वरका । ( 'उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः इत्यादि जान्नु ) ॥— आन्वीक्षिकी १ गौतमादिप्रणित तर्कविद्याको॥ दण्डनीतिः १ बृहस्पतिप्रणित अर्थशास्त्रको ॥ —आख्यायिका, उपलब्धार्था, अनुभूतार्थप्रतिपादकस्य २ अनुभूतार्थप्रतिपादक वासवदत्तादि सच्चा कथाका ॥—यत् पञ्चलक्षणं तत् पुराणम् १ पुराणका ॥ ('सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंश्यानुचरितं चैव पुराणं पञ्चलक्षणम्') ५ लक्षण पुराणका हुन्छन् ॥—प्रबन्धस्य वाक्यविस्तरस्य या कल्पना रचना सा कथा नाटकरामायणादेः प्रबन्धकल्पना कथा २ कल्पितकथाको ॥—प्रवह्लिका, प्रहेलिका २ प्रहेलिका आर्कोले संन्देह गर्ने गरि बोलेका वाक्यको ॥ जस्तै 'पानीयं पातुमिच्छामि त्वत्तः कमललोचने । यदि दास्यसि नेच्छामि नो दास्यसि पिबाम्यहम् ॥' [ दास्यसि=दातुमिच्छसि इति व्यक्तोऽर्थः, दास्यसि=दासी+असि इति गूढोऽर्थः ] इति ॥—या मन्वादिभिः प्रणीता धर्मसंहिता धर्मबोधार्थं रचिता संहिता सा स्मृतिः १ धर्मशास्त्रको ॥ समाहृतिः, संग्रहः २ संग्रहग्रन्थको नाम ॥—या समासार्था पूरणीयार्था सा समस्या १ ॥ समस्या पूर्तिको नाम ॥

वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादथाह्वयः
आख्याह्वे अभिधानं च नामधेयं च नाम च
हूतिराकारणाह्वानं संहूतिर्बहुभिः कृता
विवादो व्यवहारः स्यादुपन्यासस्तु वाङ्मुखम्
उपोद्घात उदाहारः शपनं शपथः पुमान्
प्रश्नोऽनुयोगः पृच्छा च प्रतिवाक्योत्तरे समे
मिथ्याभियोगोऽभ्याख्यानमथ मिथ्याभिशंसनम्
अभिशापः प्रणादस्तु शब्दः स्यादनुरागजः
यशः कीर्तिः समज्ञा च स्तवः स्तोत्रं स्तुतिर्नुतिः

---

यथा—'शतचन्द्रं नभस्थलम्'। तत्पूरणं यथा—'दामोदरकराघातविह्वलीकृतचेतसा। दृष्टं चाणूरमल्लेन' इत्यादि जान्नु ॥ किंवदन्ती, जनश्रुतिः २ दुनियाँमा चलेका कुराका नाम ॥—वार्ता, प्रवृत्तिः, वृत्तान्तः, उदन्तः ४ यथास्थित लोकमाचलेका हालखबरका नाम ॥—आह्वयः, आख्या, आह्वा, अभिधानम्, नामधेयम्, नाम ६ नामका ॥—हूतिः, आकारणा, आह्वानम् ३ बोलाउनाका ( हपार्नु ) का ॥—या बहुभिः कृता हूतिः, सा संहूतिः १ धेरै जनाले १ चोटी बोलाउनाको ( हपार्नु ) को ॥ विवादः, व्यवहारः २ ऋण लिंदादिंदा झगडामुद्दासंबन्धि वादविवादगर्नुका ॥ उपन्यासः, वाङ्मुखम्, २ वचनका आरम्भका ॥ उपोद्घातः, उदाहारः २ प्रकृतसंबन्धि विचारका ॥—शपनम्, शपथः २ शपथ ( किरिया ) का ॥—प्रश्नः, अनुयोगः, पृच्छा ३ प्रश्नका ॥ प्रतिवाक्यम्, उत्तरम् २ उत्तरका ॥ मिथ्याभियोगः, अभ्याख्यानम् २ भूटोबात लगाउनाका ॥ 'शतं मे धारयसि' सहेरुपिया मेरो लियेको छस् इत्यादि जान्नु ॥—मिथ्याभिशंसनम्, अभिशापः २ सुरापानादिमिथ्यापापको भूटो अत्तो लगाउनुका ॥—अनुरागजो गुणानुरागोत्थः शब्दः प्रणाद १ प्रेमले बोलेका शब्दको ॥—यशः, कीर्तिः, समज्ञा ३ कीर्तिका ॥—स्तवः, स्तोत्रं,

आम्रेडितं द्विस्त्रिरुक्तमुच्चैर्घुष्टं तु घोषणा ३३४
काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः ३३५
अवर्णाक्षेपनिर्वादपरीवादापवादवत् ३३६
उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे ३३७
पारुष्यमतिवादः स्याद्भर्त्सनं त्वपकारगीः ३३८
यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् ३३९
तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति ३४०
स्यादाभाषणमालापः प्रलापोऽनर्थकं वचः ३४१
अनुलापो मुहुर्भाषा विलापः परिदेवनम् ३४२

---

स्तुतिः, नुतिः ४ स्तुतिका नाम ॥—आम्रेडितम् १–२–३ बार दोहऱ्यायेका शब्दको ॥ यथा–सर्पः सर्पः ॥—उच्चैर्घुष्टम्, घोषणा २ उच्चास्वरले चिल्यायेका शब्दका ॥ शोकभीतिकामादिभिर्ध्वनेर्यो विकारः सा काकुः १ शोक–डर हर्ष प्रभृतिले भयेका स्वरविकारको ॥—अवर्णः, आक्षेपः, निर्वादः, परीवादः, अपवादः, उपक्रोशः, जुगुप्सा, कुत्सा, निन्दा, गर्हणम् १० निन्दाका ॥ 'अपवादवत्' इति वत्प्रत्ययेनावर्णादीनामुपक्रोशस्य चैकलिङ्गत्वं ज्ञापितम् । उपक्रोशान्ता अवर्णादयः, पुंसि भन्ने तात्पर्य हो ॥—पारुष्यम्, अतिवादः, २ निष्ठुरभाषणका नाम ॥—अपकारगीः अपकारार्थकं भाषणं, तद् भर्त्सनं २ हप्काउनु ( झर्पानु ) का ॥—कस्यांचित् व्यक्तौ क्रोधपूर्वकं दोषप्रतिपादनं उपालम्भः,१ क्रोध निन्दासहितको गालीको॥ यः सनिन्दो निन्दायुक्त उपालम्भः ५ परिभाषणं १ शिकायतसहित दोषकहनुका ॥—मैथुनं प्रति परस्त्रीपुरुष, संयोगेन निमित्तेन य आक्रोशस्तत्र आक्षारणा १ परपुरुष या परस्त्री गमन संबन्धि दोषलगाउनेको ॥—आभाषणम्, आलापः, २ वातचित गर्नाका ॥ यदनर्थकं वचः स प्रलाप अर्थनवर्थका वचनको ॥—अनुलापः, मुहुर्भाषा, २ बार बार बोलने वचनको ॥—विलापः, परिदेवनम्, २ रूँदै अलाप् विलापगर्नुका ॥

विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः ३४३
सुप्रलापः सुवचनमपलापस्तु निह्नवः ३४४
'चोद्यमाक्षेपाभियोगौ शापाक्रोशौ दुरेषणा **
अस्त्री चाटु चटु श्लाघा प्रेम्णा मिथ्याविकत्थनम्' **
संदेशवाग्वाचिकं स्याद्वाग्भेदास्तु त्रिषूत्तरे ३४५
रुशती वागकल्याणी स्यात्कल्या तु शुभात्मिका ३४६
अत्यर्थमधुरं सान्त्वं संगतं हृदयंगमम् ३४७
निष्ठुरं परुषं ग्राम्यमश्लीलं सूनृतं प्रिये ३४८
सत्येऽथ संकुलक्लिष्टे परस्परपराहते ३४९
लुप्तवर्णपदं ग्रस्तं निरस्तं त्वरितोदितम् ३५०

---

विप्रलापः, विरोधोक्तिः, २ परस्परनमिलेका कुराको ॥—मिथः परस्परमुक्तिप्रत्युक्तियुक्तं यद्भाषणं स संलापः १ परस्पर बोलनाको नाम ॥—सुप्रलापः, सुवचनम्, २ असल वचनका ॥—अपलापः, निह्नवः, २ ढाँटनाका ॥—संदेशवाक्, वाचिकम्, २ दूतादिद्वारा समाचार पठायेका मौखिक संन्देशका ॥—अतः परं वक्ष्यमाणा वाग्भेदाः सम्यगन्तास्त्रिषु । यो भन्दाअगाडी सम्यकसंमका-शब्द त्रिलिङ्गमाछन् जस्तै ॥—रुशन् शब्दः, रुशद्वचनम् । या अकल्याणी वाक् सा रुशती १ अशुभवचनको नाम ॥ या शुभात्मिका वाक् सा कल्या १ शुभ वचनको ॥—यदत्यर्थमतिशयेन मधुरं तत् सान्त्वम् १ साह्रै मीठावचनको नाम ॥ संगतम्, हृदयंगमम्, २ चित्तबुझ्ने वचनका ॥—निष्ठुरम्, परुषम् २ कठोर रूखावचनका नाम ॥—ग्राम्यम्, अश्लीलम्, २ पाखे गँवार बोलीका नाम ॥—यत्प्रियं सत्यं वचनं तत् सूनृतं २ साँचो प्यारो बोलीका ॥ यत्परस्परेण विरुद्धं 'माता मे वन्ध्या' इतिवत् पूर्वापरविरुद्धं संकुलम्, क्लिष्टम्, २ परस्पर न मिलने वचनका नाम ॥ जस्तै 'पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादिजान्नु ॥ यल्लुप्तवर्णपदमसंपूर्णोच्चारितं वचस्तत् ग्रस्तं १ वर्णपदलुप्तपारेका

अम्बूकृतं सनिष्ठीवमबद्धं स्यादनर्थकम् ३५१
अनक्षरमवाच्यं स्यादाहतं तु मृषार्थकम् ३५२
'सोल्लुण्ठनं तु सोत्प्रासं भणितं रतिकूजितम् **
श्राव्यं हृद्यं मनोहारि विस्पष्टं प्रकटोदितम्' **
अथ म्लिष्टमविस्पष्टं वितथं त्वनृतं वचः ३५३
सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति ३५४
शब्दे निनादनिनदध्वनिध्वानरवस्वनाः ३५५
स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः ३५६
आरवारावसंरावविरावा अथ मर्मरः ३५७
स्वनिते वस्त्रपर्णानां भूषणानां तु शिञ्जितम् ३५८
निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि ३५९

---

वचनको ॥-यत्स्वरितोदितं निरस्तं २ छीटावचनका ॥-सनिष्ठीवं लालायुक्तं तत् अम्बूकृतं १ थुकउडायेर बोलेका वचनको ॥-यदनर्थकमर्थशून्यं तदबद्धं स्यात् १ अर्थ नमिलने वचनको ॥—अनक्षरम्, अवाच्यम्, २ बोलन नहुने बचन को ॥ मृषार्थकमत्यन्ताभूतार्थकं तत् आहतं १ साह्रै भूटा वचनको नाम ॥—जस्तै 'एष बन्ध्यासुतो याति खपुष्पकृतशेखरः । मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्धरः ॥' इत्यादि जान्नु ॥ म्लिष्टम्, अविस्पष्टम्, २ अस्पष्ठ वचनका नाम ॥-यदनृतं वचः तत् वितथमिति १ असत्य वचनको ॥ सत्यम्, तथ्यम्, ऋतम्, सम्यक्, ४ सत्यवचनका नाम। अमूनि तद्वति सत्यवति त्रिषु। यथा—सत्या स्त्री, सत्यः पुमान्, सत्यं कुलम्, ॥—शब्दः, निनादः, निनदः, ध्वनिः, ध्वानः, रवः, स्वनः, स्वानः, निर्घोषः, निर्ह्रादः, नादः, निस्वानः, निस्वनः, आरवः, आरावः, संरावः, विरावः १७ शब्दका ( अवाज ) का नाम॥-वस्त्रपर्णानां स्वनिते शब्दे मर्मरः १ वस्त्र र पातका शब्दको नाम॥-भूषणानां नूपुरादीनां स्वनिते, शिञ्जितं १ गहनाका शब्दको ( अवाज ) को

वीणायाः क्वणिते प्रादेः प्रक्वाणप्रक्वणादयः ३६०
कोलाहलः कलकलस्तिरश्चां वाशितं रुतम् ३६१
स्त्री प्रतिश्रुत्प्रतिध्वाने गीतं गानमिमे समे ३६२

इति शब्दादिवर्गः ॥ १०. अथ नाट्यवर्गः

निषादर्षभगान्धारषड्जमध्यमधैवताः ३६३
पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ३६४
काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे ३६५
कलो मन्द्रस्तु गम्भीरे तारोऽत्युच्चैस्त्रयस्त्रिषु ३६६
'नृणामुरसि मध्यस्थो द्वाविंशतिविधो ध्वनिः ❀❀
स मन्द्रः कण्ठमध्यस्थस्तारः शिरसि गीयते' ❀❀

---

नाम ॥ निक्वाणः, निक्वणः, क्वाणः, क्वणः, क्वणनम्, ७ विणाका शब्दका नाम ॥ प्रादेरुपसर्गात् ये प्रक्वाणः, प्रक्वणः, इत्यादयस्ते वीणाया एव क्वणिते ई २ पनि वीणाकै शब्दका नाम हुन् ॥—कोलाहलः, कलकलः २ कोकोहोलो शब्दका नाम ॥ तिरश्चां पक्षिणां रुतं शब्दः वाशितम् १ पक्षिका अवाजको नाम ॥—प्रतिश्रुत्, प्रतिध्यानः २ प्रतिध्वनिका नाम ॥ गीतम्, गानम् २ गानका नाम ॥

३६३-४३८, निषादः, ऋषभः, गान्धारः, षड्जः, मध्यमः, धैवतः, पञ्चमः, इत्यमी तन्त्रीभ्यः कण्ठेभ्यश्चोत्थिताः इ ७ गवैयाका कण्ठबाट उठेका र बीणाप्रभृतिबाट उठेका शब्दका नाम ॥ तेस्मा निषादं नर्दन्ति गजाः, ऋषभं गावः, गान्धारं अजादयः, षड्जं मयूराः, मध्यमं क्रौञ्चाः, धैवतमश्वाः, पञ्चमं कोकिलाः इत्यादि जान्नु ॥—ईषत् कलः काकली ३ सूक्ष्म स्पष्ट स्वरका नाम ॥ मधुरः श्रुतिसुखः, स चासोवस्फुटोऽव्यक्ताक्षरः, एतादृशे ध्वनौ कल १ मीठो अस्पष्ट स्वरको नाम ॥ गम्भीरे ध्वनौ मन्द्र २ गम्भीर शब्दको नाम ॥ अत्युच्चैर्ध्वनौ तार १ अति उच्च स्वरको नाम ॥

समन्वितलयस्त्वेकतालो वीणा तु वल्लकी ३६७
विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी ३६८
ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् ३६९
वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् ३७०
चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् ३७१
मृदङ्गा मुरजा भेदास्त्वङ्क्यालिङ्ग्योर्ध्वकास्त्रयः ३७२
स्याद्यशःपटहो ढक्का भेरी स्त्री दुन्दुभिः पुमान् ३७३

---

त्रयः कलमन्द्रतारास्त्रिषु ३ तीनलिङ्गमा छन् ॥—यः सम्यगन्वितोऽनुगतो लयो गीतादिसाम्यं यत्र स समन्वितलयः, एकताल २ गाउनु बजाउनु नाच्नु ई ३ को तालमिलनुको नाम ॥—वीणा, वल्लकी, विपञ्ची ३ वीणाका नाम ॥—सा वीणा तु सप्तभिस्तन्त्रीभिरुपलक्षिता परिवादिनी ७ तार लागेका वीणाका नाम ॥—यद्वीणादिकं वाद्यं तत् ततं १ वीणा आदि बजाउने बाजाको नाम ॥ आदिना सैरन्ध्रीरावणप्रहस्तकिंनर्यादि लिईछन् ॥—यन्मुरजादिकं मृदङ्गादिकं आदिना पटहादि, मुखे चर्मणा बध्यते तदानद्धं मुखमा १ छालालायेर बजाउने मुरज आदि बाजाको नाम ॥—ंशादिकम् । आदिना शङ्खादि । तत्सुषिरं १ वंशी बाँसुरी शनै आदि फुकेर बजाउने सुषिरवाद्यको नाम ॥—यत्कांस्यमयतालादिकं, आदिना घण्टाझल्लर्यादि तद्घनं १ ठोकेर बजाउनु पर्ने साह्रा घण्टा झ्याली इत्यादि घनवाद्यको नाम ॥—इदं ततादिकं चतुर्विधं वाद्यं वादित्रातोद्यनामकं वादित्रमातोद्यं च नाम यस्य तत् पूर्वोक्त ततं, आनद्धं, सुषिरं, घनं, ४ सामान्य बाजाका नाम ॥—मृदङ्गाः, मुरजाः २ मृदङ्गका नाम ॥ बहुविधत्वाद्बहुवचनम् ॥—अङ्क्यः, आलिङ्ग्यः, ऊर्ध्वकः ३ मृदङ्गका भेद हुन् हर्रीकारवाला अङ्क्यः जौकोमध्यभागजस्तो उर्ध्वकः गोपुच्छाकार वाला आलिङ्ग्यः हुन्छन्॥ यशसे य आदौ पटहो वाद्यते स यशःपटहः । स एव ढक्का यशपटहः, २ नगराका नाम ॥—भेरी, दुन्दुभिः २ कर्नालका नाम ॥

आनकः पटहोऽस्त्री स्यात्कोणो वीणादिवादनम् ३७४
वीणादण्डः प्रवालः स्यात्ककुभस्तु प्रसेवकः ३७५
कोलम्बकस्तु कायोऽस्या उपनाहो निबन्धनम् ३७६
वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः ३७७
मर्दलः पणवोऽन्ये च नर्तकीलासिके समे ३७८
विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात् ३७९
तालः कालक्रियामानं लयः साम्यमथास्त्रियाम् ३८०
ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने ३८१
तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम् ३८२

---

आनकः, पटहः २ दमाहाका नाम ॥—वीणादि वाद्यते येन तद्धनुराकृति काष्ठं कोण ॥—वीणादण्डः प्रवालः २ वीणा बजाउने दण्डका नाम ॥—ककुभः, प्रसेवकः २ वीणाका तलतिर छालाले बाँधेका भाण्डका ॥—अस्या वीणायाः कायस्तन्त्रीरहितोदण्डादिसमुदायः कोलम्बकः १ तारनलायेका केवल वीणाको ॥ —यत्र वीणाप्रान्ते तन्त्र्यो निबध्यन्ते तन्निबन्धनम् , उपनाहः १ वीणाको तार बाँधने किलाको ॥—डमरुः, मड्डुः, डिण्डिमः, झर्झरः, मर्दलः, पणवः ६ डमरू, ठूलोडमरू, डिव्डिवे, (झ्याँज) झ्याली, मादल, तम्बुरा क्रमशः ६ का छवटा नाम ॥ हुडुकः, गोमुखः आदिपनिछन् । अन्ये च हुड्डुक-गोमुखादयः सन्ति ॥—नर्तकी, लासिका, २ नाँच्ने स्त्रीका नाम ॥—कर-चरणादिभिर्यद्विलम्बितं नृत्यादिकं तत् तत्त्वं १ ( ढीलो ) गरियेका नृत्य गीतवाद्यको नाम ॥—यद्द्रुतं शीघ्रं नृत्यादिकं तत् ओघः १ छीटो गरिये-का नृत्यगीत वाद्यको नाम ॥—यन्मध्यं न विलम्बितं नापि द्रुतं तत् घनं १ मध्यम न ढीलो नछीटो रितले गरियेका नृत्य गीत वाद्यको नाम ॥—कालक्रिययोर्मानं नियमहेतुः ताल १ काल ( टायम ) २ क्रिया नर्तन गान वादन प्रमाण तालको नाम ॥—गीतवाद्यपादादिन्यासानां क्रियाकालयोः

भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः ३८३
स्त्रीवेषधारी पुरुषो नाट्योक्तौ गणिकाज्जुका ३८४
भगिनीपतिरावुत्तो भावो विद्वानथावुकः ३८५
जनको युवराजस्तु कुमारो भर्तृदारकः ३८६
राजा भट्टारको देवस्तत्सुता भर्तृदारिका ३८७
देवी कृताभिषेकायामितरासु तु भट्टिनी ३८८
अब्रह्मण्यमवध्योक्तौ राजश्यालस्तु राष्ट्रियः ३८९
अम्बा माताऽथ बाला स्याद्वासूरार्यस्तु मारिषः ३९०

---

साम्यं लय १ लय नाच गान बाजाहरूको यथोचित मेलको नाम ॥—ताण्डवम्, नटनम्, नाट्यम्, लास्यम्, नृत्यम्, नर्तनम् ६ नाचका नाम ॥ —नृत्य-गीत वाद्यमितीदं त्रयं मिलित्वा तौर्यत्रिकं १ नाँच गान वाद्य इन्का समुदायका नाम ॥ यः स्त्रीवेषधारी नर्तकः पुरुषस्तत्र भ्रकुंसः, भ्रुकुंसः, भ्रूकुंसः ३ नाँच्नलाई स्त्रीको भेषधारणगर्ने पुरुषका नाम ॥ नाट्योक्तौ नाट्य-प्रकरणे, नाट्यादन्यत्र प्रयोगो नास्ति अब उप्रान्तका अङ्गहारोङ्ग विक्षेप भन्ने श्लोक देखी पैलेका शब्दको प्रयोग प्रायः नाटकमा मात्र गरिन्छ ॥ या गणिका सा अज्जुका १ नाँचकी वेश्याको नाम ॥—भगिन्याः पतिः आवुत्त १ भिनाजू या बहिने जुवाईंको नाम ॥—यो विद्वान् स भाव १ विद्वान्को नाम ॥—जनकस्तु आवुक १ पिताको नाम ॥—युवराजस्तु कुमारः, भर्तृदारकः २ राजकुमारका नाम ॥—भट्टारकः, देवः २ राजाका नाम ॥—तस्य राज्ञः सुता भर्तृदारिका १ राजकन्याका नाम ॥—कृतोऽभिषेको यस्यास्तस्यां राज्ञ्यां देवी १ पट्टाभिषेकभयेकीरानी ( पटरानी ) को नाम ॥ —इतरासु राज्ञीषु भट्टिनी १ अरुरानीको नाम ॥—अवध्यस्य वधानर्हस्य ब्राह्मणादेरुक्तौ दोषोक्तिकरणे अब्रह्मण्यं १ अवध्य ब्राह्मण मारेको दोष लगाउनका नाम ॥ दुहाई ( गुहाईका ) नाम ॥—राज्ञः श्यालो राष्ट्रिय १ राजाका शालाको नाम ॥—अम्बा, माता २ आमाका नाम ॥-बाला, वासूः

अत्तिका भगिनी ज्येष्ठा निष्ठानिर्वहणे समे ३९१
हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति ३९२
अङ्गहारोऽङ्गविक्षेपो व्यञ्जकाभिनयौ समौ ३९३
निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके ३९४
शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः ३९५
बीभत्सरौद्रौ च रसाः शृङ्गारः शुचिरुज्ज्वलः ३९६
उत्साहवर्धनो वीरः कारुण्यं करुणा घृणा ३९७
कृपा दयाऽनुकम्पा स्यादनुक्रोशोऽप्यथो सहः ३९८
हासा हास्यं च बीभत्सं विकृतं त्रिष्विदं द्वयम् ३९९

---

२ कुमारी (ठिटिका) नाम ॥—आर्यः, मारिषः २ आफुले मान्ने सूत्रधारका पार्श्ववर्तीका नाम ॥—या ज्येष्ठा भगिनी सा अत्तिका १ दीदीको नाम ॥—निष्ठा, निर्वहणम् २ नाटक समाप्ति या पाँचौं सन्धि विशेषका नाम ॥—नीचां प्रत्याह्वाने हण्डे, १ साना दर्जाका स्त्रीलाई बोलाउने संबोधन पदको नाम ॥ चेटीं प्रति आह्वाने हञ्जे, १ केटीलाई बोलाउने संबोधन पदको नाम ॥ सखीं प्रत्याह्वाने हला १ सखीलाई बोलाउने संबोधन पदको नाम ॥ उपरोक्त ३ शब्द अव्ययमा छन् ॥—अङ्गहारः, अङ्गविक्षेपः २ नाँच्दा अँलाहातपाउ इत्यादि चलाउनका नाम ॥—व्यञ्जकः, अभिनयः २ नेत्र हातद्वारा मनको अभिप्राय प्रकटगर्नुका नाम ॥—अङ्गेन निर्वृत्ते निष्पन्ने कर्मणि आङ्गिकम् १ अङ्गका चेष्टा विशेष कटाक्ष आदिको नाम ॥ सत्त्वेनान्तःकरणेन निर्वृत्ते सात्त्विकम् १ सत्वगुणबाट उत्पन्न स्तम्भ स्वेद रोमाञ्च स्वरभङ्ग आदिको नाम ॥ इ २ शब्दपनि ३ लिङ्गी छन् ॥—शृङ्गारः, वीरः, करुणः, अद्भुतः, हास्यः, भयानकः, बीभत्सः, रौद्रः ८ रसका नाम ॥—शृङ्गारः, शुचिः, उज्ज्वलः ३ शृङ्गाररसका नाम ॥—उत्साहवर्धनः, वीरः २ वीररसका नाम ॥—कारुण्यम्, करुणा, घृणा, कृपा, दया, अनुकम्पा, अनुक्रोशः ७ करुणरस ( दयाका ) नाम ॥ हसः, हासः, हास्यम् ३

विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ भैरवम् ४००
दारुणं भीषणं भीष्मं घोरं भीमं भयानकम् ४०१
भयंकरं प्रतिभयं रौद्रं तूग्रममी त्रिषु ४०२
चतुर्दश दरस्त्रासो भीतिर्भीः साध्वसं भयम् ४०३
विकारो मानसो भावोऽनुभावो भावबोधकः ४०४
गर्वोऽभिमानोऽहंकारो मानश्चित्तसमुन्नतिः ४०५
'दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः' ❋❋
अनादरः परिभवः परीभावस्तिरस्क्रिया ४०६
रीढावमाननावज्ञावहेलनमसूर्क्षणम् ४०७

---

हास्यरस :हँसाईका नाम ॥—बीभत्सम्, विकृतम् २ बीभत्सरस घिन लागने वस्तुका नाम ॥ इदं द्वयं रसे पुंसि रस अर्थमा पुं० रसवान् अर्थमा ३ लिङ्गी छन् ॥—विस्मयः, अद्भुतम्, आश्चर्यम्, चित्रम् ४ अद्भुतरस आश्चर्यका नाम ॥—भैरवम्, दारुणम्, भीषणम्, भीष्मम्, घोरम्, भीमम्, भयानकम्, भयंकरम्, प्रतिभयम्, ९ भयानक रस ( डर लाग्ने वस्तु ) का नाम ॥—रौद्रम्, उग्रम्, २ रौद्ररस सारै डर-लाग्ने वस्तुका नाम ॥—अमी अद्भुताद्य उग्रान्ताश्चतुर्दश शब्दाः रसे पुंसि । तद्वति तु त्रिषु वाच्यलिङ्गाः ई १४ शब्द रसलाई कंहदा पुं० रसवान् लाई कंहदा ३ लिङ्गमा छन् ॥—दरः, त्रासः, भीतिः, भीः, साध्वसम्, भयम्, ६ भय (डरका) नाम ॥—मानसः, मनः संबन्धि विकारो भाव १ मनोविकार रति, हास, शोक इत्यादिको नाम ॥—यो भावबोधकश्चित्तविकारस्य प्रकाशकः कटाक्षादिः सोऽनुभाव १ मनकोविकारलाई पैदागर्ने इत्यादि सूचक रोमाञ्च आदिको नाम ॥—गर्वः, अभिमानः, अहंकारः, ३ अभि-मान घमण्डका नाम ॥—चित्तस्य समुन्नतिः परस्मादुत्कर्षचिन्तनेनौन्नत्यं मान १ अरूभन्दा ठूलोछु भन्नेसंझनु चिन्तोन्नतिको नाम ॥—अनादरः, परिभवः, परीभावः, तिरस्क्रिया, रीढा, अवमानना, अवज्ञा, अवहेलनम्, असूर्क्ष-

मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा साऽपत्रपाऽन्यतः ४०८
क्षान्तिस्तितिक्षाऽभिध्या तु परस्य विषये स्पृहा ४०९
अक्षान्तिरीर्ष्याऽसूया तु दोषारोपो गुणेष्वपि ४१०
वैरं विरोधो विद्वेषो मन्युशोकौ तु शुक् स्त्रियाम् ४११
पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि ४१२
कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ ४१३
शुचौ तु चरिते शीलमुन्मादश्चित्तविभ्रमः ४१४
प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदम् ४१५
इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः ४१६
कामोऽभिलाषस्तर्षश्च सोऽत्यर्थं लालसा द्वयोः ४१७

---

णम्, ६ अनादरका नाम ॥—मन्दाक्षम्, ह्रीः, त्रपा, व्रीडा, लज्जा, ५ लज्जा ( लाज ) का नाम ॥—सा लजा, अन्यतः परस्माच्चेत् अपत्रता १ आफूभन्दा ठूलादेखी भयेकालाजको ॥—क्षान्तिः, तितिक्षा, २ अर्काको उन्नतिलाई सहनगर्नुका नाम ॥—परस्य विषये परकीयधने स्पृहा अभिध्या अर्काको धन सम्पत्ति आदिको इच्छागर्नुको नाम ॥—अक्षान्तिः, ईर्ष्या, २ अर्काका सम्पत्तिकोसहन न गर्नुका नाम ॥—गुणेष्वपि दोषारोपः असूया १ गुणी जनमा दोषारोपण गर्नुका नाम ॥—वैरम्, विरोधः, विद्वेषः, ३ वैरभावका नाम ॥—मन्युः, शोकः, शुक्, ३ शोकका नाम ॥—पश्चात्तापः, अनुतापः, विप्रतीसारः, ३ पश्चात्ताप ( पछीता ) का नाम ॥—कोपः, क्रोधः, अमर्षः, रोषः, प्रतिघः, रुट्, क्रुद्धः, ७ क्रोधका नाम ॥—रुट्-क्रुधौ स्त्रीलिङ्गमाछन् ॥—शुचौ शुद्धे चरित आचरणे शुद्धाचरणः, शीलम् १ असल स्वभाव आचरणका नाम ॥—उन्मादः, चित्तविभ्रमः, २ पागलपना र बहुलाउनुका ॥—प्रेमा, प्रियता, हार्दम्, प्रेम, स्नेहः, ५ प्रेमका नाम ॥—'प्रेमा' पुमान्, स्नेह २ पुंलिङ्ग माछन् ॥—दोहदम्, इच्छा, काङ्क्षा, स्पृहा, ईहा,–

उपाधिर्ना धर्मचिन्ता पुंस्याधिर्मानसी व्यथा ४१८
स्याच्चिन्ता स्मृतिराध्यानमुत्कण्ठोत्कलिके समे ४१९
उत्साहोऽध्यवसायः स्यात्स वीर्यमतिशक्तिभाक् ४२०
कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे ४२१
कुसृतिर्निकृतिः शाठ्यं प्रमादोऽनवधानता ४२२
कौतूहलं कौतुकं च कुतुकं च कुतूहलम् ४२३
स्त्रीणां विलासबिब्बोकविभ्रमा ललितं तथा ४२४
हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः ४२५

---

तृट्, वाञ्छा, लिप्सा, मनोरथः, कामः, अभिलाषः, तर्षः, १२ इच्छाका नाम ॥—स तर्षो महांश्चेत् लालसा १ ठूलो इच्छा ( लालच ) को नाम ॥ स्त्रीपुंसयोः पु० स्त्री०माछ ॥—उपाधिः, धर्मचिन्ता, २ धर्मसंझना का नाम 'उपाधिः' पु० माछ ॥—आधिः, मानसोव्यथा, २ मनको व्यथा दुःखका नाम ॥—चिन्ता, स्मृतिः, आध्यानम्, ३ स्मरण (संझना) का नाम ॥—उत्कण्ठा, उत्कलिका, २ उत्कण्ठाका (प्रबलइच्छा) का॥—उत्साहः, अध्यवसायः, २ उत्साहका नाम ॥—येन कृत्वा असाध्यसाधनेऽप्युद्यतो भवति, स उत्साहोऽतिशक्तिभाक् वीर्यम् २ अतिशक्ति सहित उत्साहका नाम ॥—कपटः, व्याजः, दम्भः, उपाधिः, छद्म, कैतवम्, कुसृतिः, निकृतिः, शाठ्यम्, ९ छलकपटका नाम ॥—प्रमादः, अनवधानता, २ असावधानि भूलचुक्का नाम ॥–कौतूहलम्, कौतुकम्, कुतुकम्, कुतूहलम्, ४ कौतूक(खेल) तमासा जादू लहड इत्यादि आश्चर्यजनकका नाम ॥—विलासः, बिब्बोकः [ बिब्वोकः ] विभ्रमः, ललितम्, हेला, लीला, ६ यौवनावस्था को अनुरागिणी भयेकी स्त्री हरूमा हुने विलास * विब्वोक † विभ्रम ‡ ललित + हेला— लीला ÷ इत्यादि चेष्टाका नाम ॥ विशेष ठुला अमर-कोशको टिपणीमा छन् ॥ स्त्रीणां शृङ्गारभावजाः, शृङ्गाररसमुद्भूताः क्रियाः चेष्टाः हावा १ स्त्री हरूका

द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च ४२६
व्याजोऽपदेशो लक्ष्यं च क्रीडा खेला च कूर्दनम् ४२७
घर्मो निदाघः स्वेदः स्यात्प्रलयो नष्टचेष्टता ४२८
अवहित्थाकारगुप्तिः समौ संवेगसंभ्रमौ ४२९
स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक् स्मितम् ४३०
मध्यमः स्याद्विहसितं रोमाञ्चो रोमहर्षणम् ४३१
क्रन्दितं रुदितं क्रुष्टं जृम्भस्तु त्रिषु जृम्भणम् ४३२
विप्रलम्भो विसंवादो रिङ्गणं स्खलनं समे ४३३
स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि ४३४

---

स्वभाववाटै उत्पन्नभयेका चेष्टाको नाम ॥—द्रवः, केलिः, परीहासः, क्रीडा, लीला, नर्म, ६ खेल कूद डट्टाका नाम ॥—व्याजः, अपदेशः, लक्ष्यम्, ३ निहुँ ( बहानाका ) नाम ॥—क्रीडा, खेला, कूर्दनम्, ३ बाल-लीला खेल कूदका नाम ॥—घर्मः, निदाघः, स्वेदः, ३ पसीनाका ॥—प्रलयः, नष्टचेष्टता, २ मूर्च्छाका ॥—अवहित्था, आकारगुप्तिः, २ आफ्नु अहुभार लुकाउनुका ॥—संवेगः, संभ्रमः, २ हर्षादिले कार्यमा हड्वड गर्नुका नाम ॥—सोत्प्रासः आच्छुरितकं २ मनमा केही अभिप्रायलाई लियेर भयेकाहास्यको नाम ॥—स हासो मनागीषच्चेत् स्मितं १ मन्दहास्य उत्तमदर्जाको मुसुमुसु हास्यको नाम ॥—स हासो मध्यमश्चे दनल्पाधिकस्तर्हि विहसितं १ मध्यमदर्जाका हास्यको नाम ॥—रोमाञ्चः, रोमहर्षणम्, २ रोमाञ्च शरीरमा काँढा उम्रनुका नाम ॥—क्रन्दितम्, रुदितम्, क्रुष्टम्, ३ रुनाका नाम ॥—जृम्भः, जृम्भणम्, २ हाईका नाम। जृंभः त्रि.लि.माछ॥-विप्रलम्भः, विसंवादः, ई २ ठगाई भनेको कुरोपुरानगर्नुका नाम ॥—रिङ्गणम्, स्खलनम्, २ स्वधर्ममार्गवाट प्रतिकूलहुनु चिप्लिनु लड्नुका नाम ॥—निद्रा, शयनम्, स्वापः, स्वप्नः, संवेशः, ५ निद्राका

तन्द्री प्रमीला भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम् ४३५
अदृष्टिः स्यादसौम्येऽक्ष्णि संसिद्धिप्रकृती त्विमे ४३६
स्वरूपं च स्वभावश्च निसर्गश्चाथ वेपथुः ४३७
कम्पोऽथ क्षण उद्धर्षो मह उद्धव उत्सवः ४३८

इति नाट्यवर्गः ॥ ११. अथ पातालभोगिवर्गः

अधोभुवनपातालं बलिसद्म रसातलम् ४३९
नागलोकोऽथ कुहरं शुषिरं विवरं बिलम् ४४०
छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषिः ४४१
गर्तावटौ भुवि श्वभ्रे सरन्ध्रे शुषिरं त्रिषु ४४२
अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः ४४३
ध्वान्ते गाढेऽन्धतमसं क्षीणेऽवतमसं तमः ४४४

---

नाम ॥—तन्द्री, प्रमीला, २ निद्राकाआदि र अन्तमा हुने आलस्यका ( उङ्नाका ) नाम ॥ भ्रकुटिः, भ्रुकुटिः भ्रूकुटिः, ३ क्रोध आदिले आँखा तर्नुका नाम ॥—असौम्येऽक्ष्णि सरोषे चक्षुषि अदृष्टि १ डरलाग्दा आँखाका नाम ॥—संसिद्धिः, प्रकृतिः, स्वरूपम्, स्वभावः, निसर्गः, ५ स्वभावका नाम ॥—वेपथुः, कम्पः, २ कम्पका नाम ॥—क्षणः, उद्धर्षः, महः, उद्धवः उत्सवः, ५ उत्सवका नाम । महः, अकारान्तछ ॥ इति नाट्यवर्गः ।

४३९–४६०, अधोभुवनम्, पातालम्, बलिसद्म, रसातलम्, नागलोकः ५ पातालका नाम ॥—कुहरम्, शुषिरम्, विवरम्, बिलम्, छिद्रम्, निर्व्यथनम्, रोकम्, रन्ध्रम्, श्वभ्रम्, वपा, शुषिः, ११ छिद्र (प्वाल) का नाम ॥—गर्तः, अवटः २ प्वाल परेका वस्तुका ( खाडल ) का नाम ॥—सरन्ध्रेरन्ध्रयुक्ते वस्तुनि, सुषिरं, १ प्वालपरेका बाँस आदि वस्तुको नाम ॥—अन्धकारः, ध्वान्तम्, तमिस्रम्, तिमिरम्, तमः, ५ अन्धकारका नाम ॥ यो तिनैलिङ्गमाछ ॥—'अंधकारः' नपुंसकपुंलिगमाछ ॥—

विष्वक् संतमसं नागाः काद्रवेयास्तदीश्वरः ४४५
शेषोऽनन्तो वासुकिस्तु सर्पराजोऽथ गोनसे ४४६
तिलित्सः स्यादजगरे शयुर्वाहस इत्युभौ ४४७
अलगर्दो जलव्यालः समौ राजिलडुण्डुभौ ४४८
मालुधानो मातुलाहिर्निर्मुक्तो मुक्तकञ्चुकः ४४९
सर्पः पृदाकुर्भुजगो भुजंगोऽहिर्भुजंगमः ४५०
आशीविषो विषधरश्चक्री व्यालः सरीसृपः ४५१
कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी ४५२
दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः ४५३
उरगः पन्नगो भोगी जिह्मगः पवनाशनः ४५४
'लेलिहानो द्विरसनो गोकर्णः कञ्चुकी तथा **

गाढे ध्वान्ते सातिशये तमसि अन्धतमसः १ धनान्धकारको नाम ॥—क्षीणे ध्वान्ते अवतमसि १ घटेका अन्धकारको नाम ॥—विष्वक् तमः सर्वं व्यापि ध्वान्तं संतमसम् १ सवैतिरफैलियेका व्यापक अन्धकारको नाम ॥—नागाः, काद्रवेयाः, २ नागका नाम ॥—तदीश्वरो नागानामीशः, शेषः, अनन्तः, २ नागाधिराज शेषनागको नाम ॥—वासुकिः, सर्पराजः २ वासुकिः ( नागकाराजाका ) नाम ॥—गोनसः, तिलित्सः २ गाईको जस्तो नाकहुने सानुजातिका सर्पविशेषका नाम ॥—अजगरः, शयुः, वाहसः ३ अजिंगरका नाम ॥—अलगर्दः, जलव्यालः २ पाँनीसाँपका नाम ॥—राजिलः, डुण्डुभः २ विषनहुने दुईमुखे सर्पका नाम ॥—मालुधानः, मातुलाहिः २ साँभे सर्पका नाम ॥—निर्मुक्तः; मुक्तकञ्चुकः २ काँचुली छोडेका सर्पका नाम ॥—सर्पः, पृदाकुः, भुजगः, भुजंगः, अहिः, भुजङ्गमः, आशीविषः, विषधरः, चक्री, व्यालः, सरीसृपः, कुण्डली, गूढपात्, चक्षुःश्रवाः, काकोदरः, फणी, दर्वीकरः, दीर्घपृष्ठः, दन्दशूकः, बिलेशयः, उरगः, पन्नगः,

कुम्भीनसः फणधरो हरिर्भोगधरस्तथा **
अहेः शरीरं भोगः स्यादाशीरप्यहिदंष्ट्रिका' **
त्रिष्वाहेयं विषास्थ्यादि स्फटायां तु फणा द्वयोः ४५५
समौ कञ्चुकनिर्मोकौ क्ष्वेडस्तु गरलं विषम् ४५६
पुंसि क्लीबे च काकोलकालकूटहलाहलाः ४५७
सौराष्ट्रिकः शौक्लिकेयो ब्रह्मपुत्रः प्रदीपनः ४५८
दारदो वत्सनाभश्च विषभेदा अमी नव ४५९
विषवैद्यो जाङ्गुलिको व्यालग्राह्यहितुण्डिकः ४६०

इति पातालभोगिवर्गः ] १२. अथ नरकवर्गः ।

स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम् ४६१

---

भोगी, जिह्मगः, पवनाशनः २५ साधारणसाँपका नाम ॥—यद्विषास्थ्यादि अहिभवं तत् आहेयं १ सर्पकाशरीरमा भयेका विष हड्डी आदि अवयवको नाम ॥—स्फटा, फणा २ सर्पका फँणाका नाम ॥ दुवै स्त्रीलिङ्ग पुंलिङ्गमा छन् ॥—कञ्चुकः, निर्मोकः २ सर्पका काँचुलीका नाम ॥—क्ष्वेडः, गरलम्, विषम् ३ विषका ॥—काकोलः, कालकूटः, हलाहलः, सौराष्ट्रिकः, शौक्लिकेयः, ब्रह्मपुत्रः, प्रदीपनः, दारदः, वत्सनाभः ६ स्थावरविषका ९ भेद छन् विष २ प्रकारका छन् स्थावर विष जङ्गम विष स्थावर विष हिमालयका अगल बगलमा वृक्ष छन् तिनका पात चोप बोक्रो खोटो इत्यादि विष हुन्छ ॥।जङ्गमः विष हुने सर्प बिच्छि अरिंगाल वच्छिउँ वारूलो मौरी बाँध स्याल आदिको हुन्छ स्थावरविष ५५ प्रकारको र जङ्गमविष १६ प्रकारको छ ॥ यो आयुर्वेदीय सुश्रुत ग्रन्थमा छ ॥ विषवैद्यः, जाङ्गुलिकः २ विषको औषधीगर्ने वैद्यको नाम ॥—व्यालग्राही, अहितुण्डिकः २ सर्पसमातेर नचाउँने गारुडीका नाम ॥ इति पातालभोगीवर्गः ॥

४६१-४६७. नारकः, नरकः, निरयः, दुर्गतिः, ४ नरकका नाम ॥—

तद्भेदास्तपनावीचिमहारौरवरौरवाः ४६२
सङ्घातः कालसूत्रं चेत्याद्याः सत्वास्तु नारकाः ४६३
प्रेता वैतरणी सिन्धुः स्यादलक्ष्मीस्तु निर्ऋतिः ४६४
विष्टिराजूः कारणा तु यातना तीव्रवेदना ४६५
पीडा बाधा व्यथा दुःखमामनस्यं प्रसूतिजम् ४६६
स्यात्कष्टं कृच्छ्रमाभीलं त्रिष्वेषां भेद्यगामि यत् ४६७

इति नरकवर्गः ॥ १३. अथ वारिवर्गः

समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः ४६८
उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः ४६९
रत्नाकरो जलनिधिर्यादःपतिरपांपतिः ४७०
तस्य प्रभेदाः क्षीरोदो लवणोदस्तथापरे ४७१

---

तपनः, अवीचिः, महारौरवः, रौरवः, संघातः, कालसूत्रम् ६ **अनेकप्रकारका नरकमध्ये प्रसिद्ध ६ नरकका नाम** ॥ आद्यशब्दात् तामिस्रकुम्भीपाकादयः ॥—नारका नरके भवाः सत्त्वाः प्राणिनः प्रेता १ **नरकवासीको नाम** ॥—नारकीनदी वैतरणी २ **वैतरणी नदीका नाम** ॥—नारक्यलक्ष्मीरशोभा निर्ऋति १ **नरकको अलच्छीनी देवीको नाम** ॥—विष्टिः, आजू २ **बेगारी झाराका नाम** ॥—कारणा, यातना, तीव्रवेदना, ३ **नरका टूलासजाय ( दुख ) का नाम** ॥—पीडा, बाधा, व्यथा, दुःखम्, आमनस्यम्, प्रसूतिजम्, कष्टम्, कृच्छ्रम्, आभीलम्, ९ **दुखका नाम** ॥—एषां मध्ये यद्दुःखादिकं भेद्यगामि विशेष्यवृत्ति तत्त्रिषु । जस्तै—'सेयं सेवा दुःखा च बहुरूपा', 'सोऽयं दुःखसुतोऽगुणः', 'सर्वं दुःखं विवेकिनः' इत्यादि जान्नु ॥

४६८–५५३, समुद्रः, अब्धिः, अकूपारः, पारावारः, सरित्पतिः, उदन्वान्, उदधिः, सिन्धुः, सरस्वान्, सागरः, अर्णवः, रत्नाकरः, जलनिधिः, यादःपतिः, अपांपतिः १५ **समुद्रका नाम** ॥—तस्य समुद्रस्य प्रभेदास्तु—क्षीरोदः, लवणोदः,

आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् ४७२
पयः कीलालममृतं जीवनं भुवनं वनम् ४७३
कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् ४७४
अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम् ४७५
मेघपुष्पं घनरसस्त्रिषु द्वे आप्यमम्मयम् ४७६
भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु ४७७
महत्सूल्लोलकल्लोलौ स्यादावर्तोऽम्भसां भ्रमः ४७८
पृषन्तिबिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम् ४७९
चक्राणि पुटभेदाः स्युर्भ्रमाश्च जलनिर्गमाः ४८०
कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ४८१

---

तथापरे दध्युद-घृतोद-सुरोद-इक्षूद-स्वादूदाः क्षीरोदआदि ७ समुद्रका १-१ नाम ॥—आपः, वाः, वारि, सलिलम्, कमलम्, जलम्, पयः, कीलालम्, अमृतम्, जीवनम्, भुवनम्, वनम्, कबन्धम्, उदकम्, पाथः, पुष्करम्, सर्वतोमुखम्, अम्भः, अर्णः, तोयम्, पानीयम्, नीरम्, क्षीरम्, अम्बु, शम्बरम्, मेघपुष्पम्, घनरसः २७ पानीका नाम ॥ तत्र 'आपः' स्त्रियां बहुत्वे च नित्यम् ॥—आप्यम्, अम्मयम् २ पानीबाट बनेका बरफ, सर्वत आदिका नाम ॥ तीनैलिङ्गमा छन् ॥—भङ्गः, तरङ्गः, ऊर्मिः, वीचिः ४ तरङ्गका नाम ॥—उल्लोलः, कल्लोलः २ ठूला तरङ्गका नाम ॥—अम्भसां भ्रमो मण्डलाकारेण भ्रमणम् आवर्तः १ भुँमरीको नाम ॥—पृषन्ति, बिन्दवः, पृषतः, विप्रुषः ४ पानीकाछीटा ( बिन्दु ) का नाम ॥—तत्र 'पृषत्' क्लीबे, 'बिन्दु-पृषतौ' पुंसि, 'विप्रुट्' स्त्री० ॥—चक्राणि, पुटभेदाः, भ्रमाः, जलनिर्गमाः ४ भुँमरीपरेर पानी तलखादिनुका नाम ॥ अन्तका २ नाम भङ्गालाकाढुन् कूलम्, रोधः, तीरम्, प्रतीरम्, तटम् ५ तीरका नाम । 'तटं' त्रिलिङ्गम् ॥—

पारावारे परार्वाची तीरे पात्रं तदन्तरम् ४८२
द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम् ४८३
तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम् ४८४
निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ ४८५
जलोच्छ्वासाः परीवाहाः कूपकास्तु विदारकाः ४८६
नाव्यं त्रिलिङ्गं नौतार्ये स्त्रियां नौस्तरणिस्तरिः ४८७
उडुपं तु प्लवः कोलः स्रोतोऽम्बुसरणं स्वतः ४८८
आतरस्तरपण्यं स्याद्द्रोणी काष्ठाम्बुवाहिनी ४८९
सांयात्रिकः पोतवणिक् कर्णधारस्तु नाविकः ४९०

---

परं च अर्वाक् च परार्वाची तीरे क्रमेण पारावारे १ पारी वारी दुवै पट्टिका तीरको नाम ॥ नद्याः परतीरं पारम् । नदीका पारी पट्टिका तीरको नाम ॥ अर्वाक् तीरम् आवारं वारी पट्टिका तीरको नाम ॥—तयो पारावारयोरन्तरं मध्यं पात्रं १ दुई तीरको माँझ ( पाट ) को नाम ॥—वारिणोऽन्तर्मध्ये यत्तटं तत् द्वीपः, अन्तरीपम्, २ द्वीपः ( टापू ) का नाम ॥—तोयोत्थितं तोयक्रमेणोत्थं तत् पुलिनं १ भरखर पानीलेछोडेका नदीकातीरप्रदेशको नाम ॥—सैकतम्, सिकतामयम्, २ बालु धेरैभयेका प्रदेशका नाम ॥—निषद्वरः, जम्बालः, पङ्कः, शादः, कर्दमः, ५ हिलाका नाम ॥ 'पङ्कः' पुंनपुंसकयोः पुं. नं. मा छ ॥—जलोच्छ्वासाः, परीवाहाः, २ पानीका निकाशका नाम ॥—कूपकाः, विदारकाः २ पानीका निमित्त बालुमा खनेर बनायेका खाल्डाका नाम ॥—नौतार्ये नावा तारितुमर्हे जलादौ नाव्यम् १ नाउले तर्नयोग्य नदी आदिको नाम ॥—नौः, तरणिः, तरिः ३ नाउका नाम ॥—उडुपम्, प्लवः, कोलः, ३ सानू डुङ्गाका ॥—स्वतो यदम्बुसरणं जलगमनं तत् स्रोतः १ पानीको प्राकृतिक उत्पत्तिस्थानबाट बहावको नाम ॥ आतरः, तरपण्यम्, २ खेवा (नदीतारेको) बनी ॥—काष्ठाम्बुवाहिनी काष्ठमयी जलवाहिनी सा द्रोणी १ पानी राखने काठका डूँडको नाम ॥ सांयात्रिकः,

नियामकाः पोतवाहाः कूपको गुणवृक्षकः ४९१
नौकादण्डः क्षेपणी स्यादरित्रं केनिपातकः ४९२
अभ्रिः स्त्री काष्ठकुद्दालः सेकपात्रं तु सेचनम् ४९३
क्लीबेऽर्धनावं नावोऽर्धेऽतीतनौकेऽतिनु त्रिषु ४९४
त्रिष्वागाधात्प्रसन्नोऽच्छः कलुषोऽनच्छ आविलः ४९५
निम्नं गभीरं गम्भीरमुत्तानं तद्विपर्यये ४९६
अगाधमतलस्पर्शे कैवर्ते दाशधीवरौ ४९७
आनायः पुंसि जालं स्याच्छणसूत्रं पवित्रकम् ४९८

---

पोतवणिक् २ नाँव या जहाजको व्यापारीका नाम ।।—कर्णधारः, नाविकः, २ पोतवारले खीयाउने माँझीका नाम ।।—नियामकाः, पोतवाहाः २ मगरआदि दुष्ट जन्तुबाट बचाउनलाई जहाजका उच्च भागमा बस्ने कप्तानका नाम ।।—कूपकः, गुणवृक्षकः, २ गुनधरा वर्दमान टाङ्नलाई नाउका माझमा ठड्यायेका काठका नाम ।।—नौकादण्डः, क्षेपणी :२ बह्ना डाँडाका नाम ।।—अरित्रम्, केनिपातकः २ पतवारीका नाम ।।—अभ्रिः, काष्ठकुद्दालः २ नाउको काई खुरकने काठका कोदालाका नाम ।।—सेकपात्रम्, सेचनम्, २ पानी फ्याकने छालाका थैला या (कठौती) का नाम ।। नावोऽर्धे अर्धनावम् १ नाउँका आधा हिस्साको नाम ।।—अतीतनौके नौकामतीत्य वर्तमाने मनुष्यादौ अतिनु १ नाउचढेर पारी पुगीसकेका मानिसको नाम । त्रिलिङ्गमा छ ।। अतः परं आगाधात् 'अगाध' शब्दमभिव्याप्य त्रिषु वाच्यलिङ्गाः । यहाँ देखी अगाधसम्मका शब्द त्रिलिङ्गमा छन् ।।—प्रसन्नः, अच्छः, २ निर्मलका ।।—कलुषः, अनच्छः, आविलः ३ धमिलाका नाम ।।—निम्नम्, गभीरम्, गम्भीरम्, ३ गहिराका नाम ।।—तद्विपर्यये गम्भीरादितरस्मिन् उत्तानं १ नगहिराका नाम ।। अगाधम्, अतलस्पर्शम्, २ अत्यन्त गहिराका नाम ।।—कैवर्तः, दाशः, धीवरः, ३ माझिका नाम ।। आनायः, जालम्, २ जालका नाम ।।—शणसूत्रम्, पवित्रकम्, २ सनपाठका डोरीले

मत्स्याधानी कुवेणी स्याद्बडिशं मत्स्यवेधनम् ४९९
पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः ५००
विसारः शकुली चाथ गडकः शकुलार्भकः ५०१
सहस्रदंष्ट्रः पाठीन उलूपी शिशुकः समौ ५०२
नलमीनश्चिलिचिमः प्रोष्ठी तु शफरी द्वयोः ५०३
क्षुद्राण्डमत्स्यसंघातः पोताधानमथो झषाः ५०४
रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः ५०५
तिमिंगिलादयश्चाथ यादांसि जलजन्तवः ५०६
तद्भेदाः शिशुमारोद्रशङ्कवो मकरादयः ५०७

---

बनायेका जालका नाम ।।—मत्स्याधानी, कुवेणी, २ ढकी माछाहालने भाडाका नाम ।।—बडिशम्, मत्स्यवेधनम्, २ बल्छीका नाम ।।—पृथुरोमा, झषः, मत्स्यः, मीनः, वैसारिणः, अण्डजः, विसारः, शकुली, ८ माछाका नाम ।। —गडकः, शकुलार्भकः, २ गडक माछा विशेषका नाम ।।—सहस्रदंष्ट्रः, पाठीनः, २ धेरै दाँत हुने माछाका नाम ।।—उलूपी, शिशुकः, २ सोंसका नाम ।।—नलमीनः, चिलिचिमः, २ साना जातका झारभयेका ठाउमा हुने माछा विशेषका नाम ।।—प्रोष्ठी, शफरी, २ शहरिया माछाविशेषका नाम ।। —क्षुद्राश्च ते अण्डमत्स्याश्च तेषां संघातः पोताधानम् १ फुलबाट निस्केका सानासाना माछाका समूह सिध्राका वथानको नाम ।।—अथो झषा मत्स्यविशेषाः वक्ष्यन्ते, नतु पर्यायाः । अब माछा विशेषका नाम कहिन्छन् ।। —रोहितः, मद्गुरः, शालः, राजीवः, शकुलः, तिमिः, तिमिंगिलः अनेक प्रकारका माछा मध्ये ई ८ जातका ८ थरी माछा अलग् अलग् रोंहु मोगरा आदि ८ का नाम।। 'आदि' शब्दात् नन्द्यावर्तादि.जान्नु ।।—यादांसि, जलजन्तवः, २ जलजन्तुका नाम ।।—शिशुमारः, उद्रः, शङ्कुः, मकरः । 'आदि' शब्दात् जलहस्त्यादि इ ४ जलजन्तु विशेष हुन् आदि पदले जलहस्त्यादि

स्यात्कुलीरः कर्कटकः कूर्मे कमठकच्छपौ ५०८
ग्राहोऽवहारो नक्रस्तु कुम्भीरोऽथ महीलता ५०९
गण्डूपदः किंचुलको निहाका गोधिका समे ५१०
रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः ५११
मुक्तास्फोटः स्त्रियां शुक्तिः शङ्खः स्यात्कम्बुरस्त्रियौ ५१२
क्षुद्रशङ्खाः शङ्खनखाः शम्बूका जलशुक्तयः ५१३
भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः ५१४
शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलिः ५१५
मद्गुरस्य प्रिया शृङ्गी दुर्नामा दीर्घकोशिका ५१६
जलाशयो जलाधारस्तत्रागाधजलो ह्रदः ५१७

---

पनि जान्नु ॥—कुलीरः, कर्कटकः, २ गँगटाका नाम ॥—कूर्मः, कमठः, कच्छपः, ३ कछुवा ( ठोटरी ) का नाम ॥—ग्राहः, अवहारः, २ ग्राहकूका नाम ॥—नक्रः, कुम्भीरः, २ हात्तिको आकार हुने जीव जन्तुका नाम ॥—महीलता, गण्डूपदः, किंचुलकः, ३ गँडेउलाका नाम ॥—निहाका, गोधिका, २ गोहराका ॥—रक्तपा, जलौका, जलौकसः, ३ पानीजुकाका नाम ॥—मुक्तास्फोटः, शुक्तिः, २ मोती हुने सीपिका नाम ॥—शङ्खः, कम्बुः, २ शंखका नाम ॥—क्षुद्रशङ्खाः, शङ्खनखाः, २ सानाजातका शंखका नाम ॥—जलशुक्तयो जलमात्रजाः शुक्तयः शम्बूका १ घोंगी या पानीमा हुने अनेक प्रकारका सिपीको नाम ॥ भेकः, मण्डूकः, वर्षाभूः, शालूरः, प्लवः, दर्दुरः, ६ भ्यागुताका नाम ॥—शिली, गण्डूपदी, २ गँडेउलीका नाम ॥—भेकी, वर्षाभ्वी, २ भ्यागुतीका नाम ॥—कमठी, डुलिः, २ कछुवीका नाम ॥—मद्गुराख्यस्य मत्स्यविशेषस्य प्रिया स्त्री शृङ्गी १ माछाकी पोथीको नाम ॥—दुर्नामा, दीर्घकोशिका, २ ठूला जातका जूकाका नाम ॥—जलाशयः, जलाधारः २ साधारण जलाशयका नाम ॥—अगाधमतलस्पर्शी जलं यस्य स जला-

आहावस्तु निपानं स्यादुपकूपजलाशये　५१८
पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा　५१९
नेमिस्त्रिकाऽस्य वीनाहो मुखबन्धनमस्य यत्　५२०
पुष्करिण्यां तु खातं स्यादखातं देवखातकम्　५२१
पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः　५२२
वेशन्तः पल्वलं चाल्पसरो वापी तु दीर्घिका　५३२
खेयं तु परिखाधारस्त्वम्भसां यत्र धारणम्　५२४
स्यादालवालमावालमावापोऽथ नदी सरित्　५२५
तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी　५२६

---

शयो ह्रद १ गहीरो रह ( दह ) को नाम ॥—उपकूपजलाशये कूपोद्धृताम्बु-स्थापनीयशिलादिरचितो गर्तः, यत्रत्यं जलं सुखेन गावः पिबन्तिः, आहावः, निपानम्, ईनारका समीपमा आर्को जलराख्ने खाल्डाका नाम ॥—अन्धुः, प्रहिः, कूपः, उदपानम्, ४ इनारका नाम ॥ तत्र 'उदपानं' पुंसि वा ॥—अस्य कूपस्य नेमिरन्ते रज्ज्वादिधारणार्थं दारुयन्त्रं सा त्रिका २ पानी झिक्ता डोरी अड्य्याउने पाङ्रो ( गडाडी ) का नाम ॥—अस्य कूपस्य पाषाणादिभिर्यन्मुखनिबन्धनं स वीनाह १ इनारमाथिको पर्खाल ( घेरा ) को ॥—पुष्करिणी, खातम्, २ पोखरीका नाम ॥—अखातम्, देवखातकम्, २ आफै बनेका तालको जस्तै नैनीताल भीमताल ४ तरफ पाहाड़ बिचमा ताल छन् ॥—पद्माकरः, तडागः, कासारः, सरसी, सरः, ५ कमल हुने तलाउ-का नाम ॥—वेशन्तः, पल्वलम्, अल्पसरः, ३ सानासाना पोखरीका नाम ॥ वापी, दीर्घिका, २ जलविहारका निमित्त बनायेका साना जलाशयका नाम ( बावली ) ॥—खेयम्, परिखा, २ बाँधका नाम ॥—यत्र अम्भसां धारणं क्षेत्रादिसेकार्थं जलानां संग्रहणं स आधारः पानी जमाउने कुवाको ॥—आल-वालम्, आवालम्, आवापः, ३ बृक्षका फेदमा पानी अड्याउन बनायेका

स्रोतस्वती द्वीपवती स्रवन्ती निम्नगापगा ५२७
'कूलंकषा निर्झरिणी रोधोवक्रा सरस्वती' **
गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा ५२८
भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ५२९
कालिन्दी सूर्यतनया यमुना शमनस्वसा ५३०
रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ५३१
करतोया सदानीरा बाहुदा सैतवाहिनी ५३२
शतद्रुस्तु शुतुद्रिः स्याद्विपाशा तु विपाट् स्त्रियाम् ५३३
शोणो हिरण्यवाहः स्यात् कुल्याऽल्पा कृत्रिमा सरित् ५३४
शरावती वेत्रवती चन्द्रभागा सरस्वती ५३५
कावेरी सरितोऽन्याश्च संभेदः सिन्धुसंगमः ५३६

---

गोल खाल्डो (क्यारी) का नाम ।।-नदी, सरित्, तरङ्गिणी, शैवलिनी, तटिनी, ह्रादिनी, धुनी, स्रोतस्वती, द्वीपवती, स्रवन्ती, निम्नगा, आपगा, १२ नदीका नाम ।।—गङ्गा, विष्णुपदी, जह्नुतनया, सुरनिम्नगा, भागीरथी, त्रिपथगा, त्रिस्रोताः, भीष्मसूः, ८ भागीरथी गंगाका नाम ।।—कालिन्दी, सूर्यतनया, यमुना, शमनस्वसा, ४ यमुना नदीका नाम ।। —रेवा, नर्मदा, सोमोद्भवा, मेकलकन्यका, ४ नर्मदा नदीका नाम ।।—करतोया, सदानीरा, २ पार्वतीका विवाहमा कन्यादानका संकल्पजलले पैदा भयेकी कहिल्यै नसुक्ने नदी-का नाम ।।—बाहुदा, सैतवाहिनी, २ बाहुदा नदीका नाम ।।—शतद्रुः, शुतुद्रिः, २ शतजला नदीका नाम ।।—विपाशा, विपाट्, २ व्यासा नदीका नाम ।।—शोणः, हिरण्यवाहः, २ शोणभद्र नदीका नाम ।।—या अल्पा कृत्रिमा सरित् सा कुल्या १ कुलाका नाम ।।—शरावती, वेत्रवती, चन्द्रभागा, सरस्वती, कावेरी, ५ शरावती आदि गरेका ५ नदीका अलग् अलग् ५ नाम ।। अन्याश्च सरितः कौशिकी-गण्डकी-चर्मण्वती-गोदा-वेण्याद्याः

द्वयोः प्रणाली पयसः पदव्यां त्रिषु तूत्तरौ ५३७
देविकायां सरय्वां च भवे दाविकसारवौ ५३८
सौगन्धिकं तु कह्लारं हल्लकं रक्तसंध्यकम् ५३९
स्यादुत्पलं कुवलयमथ नीलाम्बुजन्म च ५४०
इन्दीवरं च नीलेऽस्मिन्सितेकुमुदकैरवे ५४१
शालूकमेषां कन्दः स्याद्वारिपर्णी तु कुम्भिका ५४२
जलनीली तु शेवालं शैवलोऽथ कुमुद्वती ५४३
कुमुदिन्यां नलिन्यां तु बिसिनीपद्मिनीमुखाः ५४४
वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ५४५
सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ५४६

---

कौशिकी आदि गण्डकी आदि पनि छन् ॥—संभेदः, सिन्धुसंगमः, २ दोभान नदीहरू एकठाउमा भेट भयेको ठाउँ त्रिवेणी पनि भन्दछन् ॥—पयसो जलस्य पदव्यां निर्गमनमार्गे मकरमुखादिरूपा प्रणाली १ वनालो पानी बग्ने सानू खोल्सो का नाम । पुं० नं० मा छ ॥—उत्तरौ दाविकसारवौ त्रिलिङ्गछन् । देविकायां नद्यां भवं दाविकम् १ देविका नदीसंबन्धी वस्तुको । सरय्वां नद्यां भवं सारवम् १ सरयू नदीमाभयेका वस्तुको ॥—सौगन्धिकम्, कह्लारम् २ साँझमा फुलने सेताकमलका ॥—हल्लकम्, रक्तसंध्यकम्, २ साँझमा फुलने राताकमलका नाम ॥—उत्पलम्, कुवलयम्, २ राति फुलनेकमलका ॥—नीलाम्बुजन्म, इन्दीवरम्, २ नीलकमलका ॥—कुमुदम्, कैरवम्, २ राति फुलनेसेता कमलका नाम ॥—एषामुत्पलविशेषाणां कन्दः शालूकं १ कमलका जराको ॥—वारिपर्णी, कुम्भिका, २ ठूलापात हुने कमल विशेष ( पुरईन ) का ॥—जलनीली, शेवालम्, शैवलः, ३ पानीमा लाग्ने हरियो काईका ॥—कुमुद्वती, कुमुदिनी, २ चन्द्रकमलका बोटका ॥—नलिनी, बिसिनी, पद्मिनी, सूर्यकमलका बोटका ॥—पद्मम्,

पङ्केरुहं तामरसं सारसं सरसीरुहम् ५४७
बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च ५४८
पुण्डरीकं सिताम्भोजमथ रक्तसरोरुहे ५४९
रक्तोत्पलं कोकनदं नालो नालमथास्त्रियाम् ५५०
मृणालं बिसमब्जादिकदम्बे षण्डमस्त्रियाम् ५५१
करहाटः शिफाकन्दः किंजल्कः केसरोऽस्त्रियाम् ५५२
संवर्तिका नवदलं बीजकोशो वराटकः ५५३

इति वारिवर्गः ।

---

नलिनम्, अरविन्दम्, महोत्पलम्, सहस्र-पत्रम् कमलम्, शतपत्रम्, कुशेशयम् पङ्केरुहम्, तामरसम्, सारसम्, सरसीरुहम्, बिसप्रसूनम्, राजीवम्, पुष्करम्, अम्भोरुहम्, १६ सामान्यकमलका 'वा पुंसि' इति षोडशभिरपि संबध्यते १६ शब्द विकल्पले पुंलिङ्गमाछन् ॥—तत्र पुण्डरीकम्, सिताम्भोजम्, २ सामन्य सेताकमलका ॥—रक्तसरोरुहम्, रक्तोत्पलम्, कोकनदम्, ३ सामान्य राताकमलका ॥—नालः, नालम्, २ कमल आदिका डाँठका ॥—मृणालम्, बिसम्, २ पानीभित्रका डाँठ्का । नं० पुं० ॥—अब्जादिकदम्बे कमलादीनां समूहे षण्डं १ कमलका समूह्का ॥—करहाटः, शिफाकन्दः, २ कमलका जरा स्कन्दका ॥—किंजल्कः, केसरः, २ कमलका केसरका ॥—संवर्तिका, नवदलम्, २ कमलका नयाँ पातको ॥—बीजकोशः, वराटकः, २ कमल गट्टाका ॥ ५५४–५५७. म अमरसिंहले स्वर-व्योम-दिक्-काल-धी-शब्द-नाट्य-पातालभोगि-नरक वारि कहियो । शब्दादिमा आदि ग्रहण गर्नाले रस गन्धादि पनि लिइन्छ । इ स्वर्गादिको संबन्धवसले प्राप्तभयेको देवासुर मेघादि त्यो पनि कहियो ॥ यस्तै अमरसिंहले वनायेका नाम र लिङ्गको शिक्षा भयेको स्वरादि शब्दहरूको समूह अङ्ग उपाङ्ग सहित प्रथमः काण्डः कहियो ॥ बालकृष्णाचार्यले बनायेकी बालकृष्णाश्रमी नाम की नेपाली भाषाटीकामा प्रथमकाण्डः समाप्तभयो ॥

१४. अथ काण्डसमाप्तिः

उक्तं स्वर्व्योमदिक्कालधीशब्दादि सनाट्यकम् ५५४
पातालभोगि नरकं वारि चैषां च संगतम् ५५५
इत्यमरसिंहकृतौ नामलिङ्गानुशासने ५५६
स्वरादिकाण्डः प्रथमः साङ्ग एव समर्थितः ५५७

## अथ द्वितीयं काण्डम्

१. वर्गभेदाः

वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः ५५८
नृब्रह्मक्षत्रविट्शूद्रैः साङ्गोपाङ्गैरिहोदिताः ५५९

२. अथ भूमिवर्गः

भूर्भूमिरचलानन्ता रसा विश्वंभरा स्थिरा ५६०
धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः ५६१
सर्वंसहा वसुमती वसुधोर्वी वसुंधरा ५६२
गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही ५६३

---

५५८–५५९. योद्वितीयकाण्डमा अङ्ग भनेका मृग शाखानगरादिर उपाङ्ग भनेका मृत्स्ना वेशादिले सहितभयेका पृथ्वी-पुर-क्ष्माभृत्-बनौषधि-मृगादि-मनुष्य-ब्रह्म-क्षत्रिय-वैश्य-शूद्र-वर्गका इ शब्दले भन्न आरम्भ गरिये ।। यहाँ मृगादि शब्दले पक्षिको ग्रहणगरिन्छ ।।

५६०–५९३. भूः, भूमी, अचला, अनन्ता, रसा, विश्वंभरा, स्थिरा, धरा, धरित्री, धरणिः, क्षोणिः, ज्या, काश्यपी, क्षितिः, सर्वंसहा, वसुमती, वसुधा, उर्वी, वसुंधराः, गोत्रा, कुः, पृथिवी, पृथ्वी, क्ष्मा, अवनिः, मेदिनी, मही, २७ पृथिवी-

'विपुला गह्वरी धात्री गौरिला कुम्भिनी क्षमा ❋❋
भूतधात्री रत्नगर्भा जगती सागराम्बरा' ❋❋
मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका ५६४
ऊर्वरा सर्वसस्याढ्या स्यादूषः क्षारमृत्तिका ५६५
ऊषवानूषरो द्वावप्यन्यलिङ्गौ स्थलं स्थली ५६६
समानौ मरुधन्वानौ द्वे खिलाप्रहते समे ५६७
त्रिष्वथो जगती लोको विष्टपं भुवनं जगत् ५६८
लोकोऽयं भारतं वर्षं शरावत्यास्तु योऽवधेः ५६९
देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः ५७०
प्रत्यन्तो म्लेच्छदेशः स्यान्मध्यदेशस्तु मध्यमः ५७१

---

का नाम ॥—मृत्, मृत्तिका, २ माटाका नाम ॥—मृत्सा, मृत्स्ना, २ असल माटाका नाम ॥-प्रशस्ता मृत्तिका १ असलमाटालाई कहदामता भन्ने अर्थ हो ॥—सर्वैः सस्यैराढ्या मृत्तिका १ । सर्वैकिसिमको अन्न उब्जने जमीनका ॥ ऊषः, क्षारमृत्तिका, २ नुनिला माटाका नाम ॥—ऊषवान्, ऊषरः, २ खारे नुनिलो माटो हुने स्थानका नाम । दुवैत्रिलिङ्गमा-छन् ॥—स्थलम्, स्थली, २ आफैं बनेका मैदानका नाम ॥—मरुः, धन्वा, २ मरुस्थल जल नहुने ठाउँका नाम ॥—खिलम्, अप्रहतम्, २ खन् जोतकोर नगरेका बाँझा जमीनका नाम ॥—जगती, लोकः, विष्टपम्, भुवनम्, जगत् ५ भूतल ( जगत् ) का नाम ॥—अयं जम्बुद्वीपवर्ती दृश्यमानो लोकः भारतनामकं वर्षं ज्ञेयम् भारतवर्षं, भारतवर्षः भारतम् ३ हिन्दुस्तानका नाम ॥ ९ वर्षमा एक खण्डको नाम भारत हो ॥—शरावत्या अवधेः यः प्राग्दक्षिणः प्राक्सहितो दक्षिणो देशः स प्राच्य १ शरावती देखि पूर्व दक्षिणले सहित भयेको देशको नाम ॥—शरावत्या अवधेर्यः पश्चिमोत्तरः पश्चिमसहित उत्तरो देशः उदिच्यः १ शरावती देखि पश्चिम र उत्तरले सहित भयेका देशको नाम ॥—प्रत्यन्तः, म्लेच्छदेशः, २

आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः ५७२
नीवृज्जनपदो देशविषयौ तूपवर्तनम् ५७३
त्रिष्वागोष्ठान्नडप्राये नड्वान्नड्वल इत्यपि ५७४
कुमुद्वान् कुमुदप्राये वेतस्वान् बहुवेतसे ५७५
शाद्वलः शादहरिते सजम्बाले तु पङ्किलः ५७६
जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः ५७७
स्त्री शर्करा शर्करिलः शार्करः शर्करावति ५७८
देश एवादिमावेवमुन्नेयाः सिकतावति ५७९

---

सदाचार नभयेकाम्लेच्छ प्राय भयेका कामरूपादि देशका नाम ।।—मध्यदेशः, मध्यमः, २ मध्य देश ( मवेश ) अर्थात् रामेश्वर देखी उत्तर हिमालय देखी दक्षिण-प्रयाग देखी पश्चिम कुरुक्षेत्र देखी पूर्वको स्थानको नाम ।।—आर्यावर्तः, पुण्यभूमिः, २ पूर्वसमुद्र पश्चिमसमुद्र विन्ध्याचल र हिमालय पर्वतका माझका देशका नाम ।।—नीवृत्, जनपदः, २ वस्ती भयेका साधारण देशका नाम ।।—देशः, विषयः, उपवर्तनम्, ३ ग्रामका समूह भयेका देशका नाम ।।—अथ गोष्ठशब्दमभिव्याप्य वक्ष्यमाणास्त्रिषु लिङ्गेषु । यहाँ देखी गोष्ठशब्द सम्मका शब्द तिनैलिङ्गमा छन् ।। नड्वान् नड्वलः, २ नरकट ज्यादा हुने स्थानका नाम ।।—कुमुद्वान्, १ चन्द्र कमल ज्यादा हुने स्थानको ।।—वेतस्वान् १ वेत ज्यादा हुने स्थानको नाम ।।—शादैर्बालतृणैर्हरिते देशे शाद्वलः १ घाँस ज्यादा भयेका देशका नाम ।।—सजम्बाले कर्दमयुक्ते देशे पङ्किलः १ हिलो ज्यादा हुने स्थानको नाम ।।—जलप्रायम्, अनूपम् २ पानी प्रसस्त भयेका स्थानका नाम ।।—अनुगता आपोऽत्र अनूपं, नानाद्रुमलतावीरुन्निर्जरप्रान्तशीतलैः वनैर्व्याप्तमनूपं तत् सस्यैर्व्रीहियवादिभिः ।।' तथाविधः अनूपसदृशः कश्चिन्नद्यादेरुपान्तदेशः कच्छः १ २ पानी घेरै भयेका नदीका नगीचका स्थानका नाम ।।—शर्करा, शर्करिलः, २ कंकड ज्यादा भयेका देशका नाम बालुभन्दा केहि ठूला

देशो नद्यम्बुवृष्ट्यम्बुसंपन्नव्रीहिपालितः ५८०
स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ५८१
सुराज्ञि देशे राजन्वान् स्यात्ततोऽन्यत्र राजवान् ५८२
गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकम् ५८३
पर्यन्तभूः परिसरः सेतुरालौ स्त्रियां पुमान् ५८४
वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम् ५८५
अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः ५८६
सरणिः पद्धतिः पद्या वर्तन्येकपदीति च ५८७
अतिपन्थाः सुपन्थाश्च सत्पथश्चार्चितेऽध्वनि ५८८
व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः ५८९

---

कंकडभयेकाभन्ने अर्थ हो ॥—शार्करः, शर्करावान्, २ सामान्य कंकड भयेका स्थान ( देश ) का नाम ॥—सिकताः, सिकतिल २ बालुवा धेर भयेका देशका नाम । सैकतः, सिकतावान्, २ बालुवा बन्ने वस्तु भयेका देशका नाम ॥—नदीमातृकः, १ नदीको कुलो लागेर पालियेका देशको नाम ॥ देवमातृकः १ वर्षा भयेका पानीले पालियेका देशको नाम ॥—राजन्वान् १ धर्मात्मा राजाभयेका देशको नाम ॥—राजवान् १ राजा भनाउदोमात्र राजाभयेका देशको नाम ॥—गोष्ठम्, गोस्थानकम्, २ गोठका नाम ॥—गौष्ठीनं पैलोगोठभयेका ठाउँका नाम ॥—पर्यन्तभूः, परिसरः, २ नदी पर्वतका छेउछाउका नाम ॥ सेतुः, आलिः, २ पूल (साँघु) का नाम ॥—वामलूरः नाकुः, वल्मीकम्, ३ धमिराले उठायेका माटाका थुप्राका नाम ॥—अयनम्, वर्त्म, मार्गः, अध्वा, पन्थाः, पदवी, सृतिः, सरणिः, पद्धतिः, पद्या, वर्तनी, एकपदी, १२ बाटाका नाम ॥—अतिपन्थाः, सुपन्थाः, सत्पथः, ३ असल बाटाका नाम ॥—व्यध्वः, दुरध्वः, विपथः, कदध्वा, कापथः, ५ खराबबाटाका नाम ॥ तत्र कदध्वा नान्तः ॥

अपन्थास्त्वपथं तुल्ये शृङ्गाटकचतुष्पथे ५९०
प्रान्तरं दूरशून्योऽध्वा कान्तारं वर्त्म दुर्गमम् ५९१
गव्यूतिः स्त्री क्रोशयुगं नल्वः किष्कुचतुःशतम् ५९२
घण्टापथः संसरणं तत्पुरस्योपनिष्करम् ५९३
'द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी **
दिवस्पृथिव्यौ गञ्जा तु रुमा स्याल्लवणाकरः **

इति भूमिवर्गः ॥　३. अथ पुरवर्गः

पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम् ५९४
स्थानीयं निगमोऽन्यत्तु यन्मूलनगरात्पुरम् ५९५
तच्छाखानगरं वेशो वेश्याजनसमाश्रयः ५९६

---

अपन्थाः, अपथम्, २ अवाटाका नाम ॥ शृङ्गाटकम्, चतुष्पथम्, २ चौवाटाका नाम ॥—दूरश्चासौ शून्यश्च दूरशून्यः, छायाजलादिवर्जितो दूरस्थोऽध्वा मार्गः प्रान्तरं १ एक लासका बाटाको नाम ॥—यद्दुर्गमं चोरकण्टकाद्युपद्रवयुक्तं वर्त्म मार्गः कान्तारं १ जाइनसक्नुँ दुर्गमवाटाका नाम ॥—क्रोशयुगं गव्यूति दुइकोश वाटाको नाम ॥—किष्कूणां हस्तानां चतुःशतं नल्व १ चार सहे हातलामा वाटाको स्थानको नाम ॥—घण्टापथः, संसरणम्, २ राजधानी (सहर) का मूल वाटाका नाम ॥—तत्संसरणं पुरस्य नगरस्य चेत् उपनिष्करं १ गाँऊजाने राजमार्गको नाम ॥ द्यावापृथिव्यौ, रोदस्यौ द्यावाभूमि, रोदसी, दिवस्पृथिव्यौ ५ आकाश र पृथिवीका समुदायका नाम ॥—गञ्जा, रुमा, लवणाकर ३ नून खानिका नाम ॥

५९४–६३३. पूः, पुरी, नगरी, पत्तनम्, पुटभेदनम्, स्थानीयम्, निगमः, ७ सहरका नाम ॥—स्थानीयादिनामकं २ चारै तर्फ परखालले घेरेका सहरका। शाखानगरं १ मुख्य सहरका नगीचको सानु सहरको नाम ॥—वेश्याजनस्य समाश्रयो निवेशस्थानं वेशः १ वेश्या

आपणस्तु निषद्यायां विपणिः पण्यवीथिका ५९७
रथ्या प्रतोली विशिखा स्याच्चयो वप्रमस्त्रियाम् ५९८
प्राकारो वरणः सालः प्राचीनं प्रान्ततो वृतिः ५९९
भित्तिः स्त्री कुड्यमेडूकं यदन्तर्न्यस्तकीकसम् ६००
गृहं गेहोदवसितं वेश्म सद्म निकेतनम् ६०१
निशान्तपस्त्यसदनं भवनागारमन्दिरम् ६०२
गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः ६०३
वासः कुटी द्वयोः शाला सभा संजवनं त्विदम् ६०४
चतुःशालं मुनीनां तु पर्णशालोटजोऽस्त्रियाम् ६०५
चैत्यमायतनं तुल्ये वाजिशाला तु मन्दुरा ६०६

---

( रण्डी ) टोलाको नाम ॥—आपणः, निषद्या, २ गोदामका या ( बाजारका ) नाम ॥—विपणिः, पण्यवीथिका, २ बाजार लागने ठाउँका नाम ॥—रथ्या, प्रतोली, विशिखा, ३ गाउँका माँझका बाटाका नाम ॥—चयः, वप्रम्, २ माटाका ढिस्किलाका नाम ॥—प्राकारः, वरणः, सालः, ३ परखालका नाम ॥—नगरादेः प्रान्तभागे या वृतिर्वेष्टनं वेणुकण्टकादीनां तत्प्राचीनं १ खरबाँसकाँढा आदिले बारेका बारका नाम ॥—भित्तिः, कुड्यम्, २ भित्ताका नाम ॥—तत् कुड्यम् अन्तर्न्यस्तकीकसं चेत् एडूकं १ हाड् भित्र घुसारेका भित्ताको नाम ॥—गृहम्, गेहम्, उदवसितम्, वेश्म, सद्म, निकेतनम्, निशान्तम्, पस्त्यम्, सदनम्, भवनम्, अगारम्, मन्दिरम्, गृहाः, निकाय्यः, निलयः, आलयः, १६ घरका नाम ॥—वासः, कुटी, शाला, सभा, ४ सभाघरका नाम कसैकसैको मतमा २० घरैका नाम छन् ॥—संजवनम्, चतुःशालम्, २ चौघराका नाम चारै तर्फ घेरेका भित्र पटिका नाम ॥—पर्णशाला, उटजः, २ ( मुनि ) साधुहेरूका कुटीका नाम ॥—चैत्यम्, आयतनम्, २ यज्ञशालाका नाम ॥—वाजिशाला, मन्दुरा,

आवेशनं शिल्पिशाला प्रपा पानीयशालिका ६०७
मठश्छात्रादिनिलयो गञ्जा तु मदिरागृहम् ६०८
गर्भागारं वासगृहमरिष्टं सूतिकागृहम् ६०९
'कुट्टिमोऽस्त्री निबद्धा भूश्चन्द्रशाला शिरोगृहम्' **
वातायनं गवाक्षोऽथ मण्डपोऽस्त्री जनाश्रयः ६१०
हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम् ६११
सौधोऽस्त्री राजसदनमुपकार्योपकारिका ६१२
स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोऽपि च ६१३
विच्छन्दकः प्रभेदा हि भवन्तीश्वरसद्मनाम् ६१४
स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् ६१५

---

२ घोडाका तबेलाका नाम ॥—आवेशनम्, शिल्पिशाला, २ कारिगरका घरका नाम ॥—प्रपा, पानीयशालिका, २ पौशालाका नाम ॥—छात्रादिनिलयः शिष्यादीनां गृहं मठः १ विद्यार्थी र जोगी बस्ने घरको नाम॥ गञ्जा, मदिरागृहम्, २ रक्सी बनाउने भट्टिका नाम ॥—गर्भागारम्, वासगृहम्, २ कोठाका नाम ॥ अरिष्टम्, सूतिकागृहम्, २ कुना पसेकी सुत्केरी बस्ने कोठाका नाम ॥ कुट्टिमः १ ढुङ्गा छापेका पक्किजमिनको नाम ॥ चन्द्रशाला १ (बुर्जा) घरको माथिल्लो कोठाको ॥ वातायनम्, गवाक्षः, २ आँखिझ्यालका नाम ॥—मण्डपः, जनाश्रयः, २ चउतारा (मण्डपका) नाम ॥ मण्डपः शब्द पुं. नपुं० मात्र ॥—हर्म्यादि १ धनीका हवेलीको नाम ॥—प्रासाद १ देवल र दरबारको नाम ॥—सौधः, राजसदनम्, उपकार्या, उपकारिका, ४ चुनले पोतेका दरबारका नाम ॥—स्वस्तिक आदि राजदरबारका भेद हुन् ॥—चतुर्द्वारतोरणः स्वस्तिकः १ चारैतर्फ ढोका भयेका घरको नाम ॥ सर्वतोभद्रः, १ घेरै तला भयेका दरबारको नाम ॥ नन्द्यावर्तः १ वाटुलाकार घरको नाम ॥ विच्छन्दकः १ ठूलो अग्लो राम्रो घरको

शुद्धान्तश्चावरोधश्च स्यादट्टः क्षौममस्त्रियाम् ६१६
प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके ६१७
गृहावग्रहणी देहल्यङ्गणं चत्वराजिरे ६१८
अधस्ताद्दारुणि शिला नासा दारूपरि स्थितम् ६१९
प्रच्छन्नमन्तर्द्वारं स्यात् पक्षद्वारं तु पक्षकम् ६२०
वलीकनीध्रे पटलप्रान्तेऽथ पटलं छदिः ६२१
गोपानसी तु वलभी छादने वक्रदारुणि ६२२
कपोतपालिकायां तु विटङ्कं पुंनपुंसकम् ६२३
स्त्री द्वार्द्वारं प्रतीहारः स्याद्वितर्दिस्तु वेदिका ६२४
तोरणोऽस्त्री बहिर्द्वारं पुरद्वारं तु गोपुरम् ६२५

---

नाम ॥—स्त्रीगृहं अन्तःपुरम्, अवरोधनम्, शुद्धान्तः, अवरोधः, ४ राजपत्नी हेरू बस्ने खोपीका नाम ॥—अट्टः, क्षौमम्, २ कौसी ( अटाली ) का नाम ॥ प्रघाणः, प्रघणः, अलिन्दः, ३ खड्केलिका नाम ॥—गृहावग्रहणी, देहली, २ दहिला ठेलाका नाम ॥—अङ्गणम्, चत्वरम्, अजिरम्, ३ आँगनका नाम ॥—शिला १ दहिलाका तल्लापटिका ठेलाको नाम ॥—नासा १ दहिलाका माथिल्ला पटिका काठको नाम ॥—प्रच्छन्नम्, अन्तर्द्वारम्, २ गुप्तठोका झ्यालका नाम ॥—पक्षद्वारम्, पक्षकम्, २ जस्केलो भयेका दहिलाका नाम ॥—वलीकम्, नीध्रम्, २ छानाका छेउ ( दाँतिको ) ॥—पटलम्, छदिः, २ छानाका नाम ॥ छदिः सान्त स्त्रीलिङ्गमाछ ॥—गोपानसी, वलभी, २ बलाका नाम ॥—कपोतपालिका, विटङ्कम्, २ परेवाको गुण् ( खटप्वाल ) का नाम ॥—द्वाः, द्वारम्, प्रतीहारः, ३ दहिला ( ढोकाका ) नाम ॥ 'द्वाः' स्त्रीलिङ्गमा छ ॥—वितर्दिः, वेदिका, २ पेटीका नाम ॥ 'वितर्दिः' स्त्रीमाछ ॥—तोरणः, बहिर्द्वारम्, २ घरबाहिरका ढोका फाटकटका नाम ॥—पुरद्वारम्, गोपुरम्, २ सहरका फाटक ( ढोका ) का नाम ॥—

कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्नथ त्रिषु ६२६
कपाटमररं तुल्ये तद्विष्कम्भोऽर्गलं न ना ६२७
आरोहणं स्यात्सोपानं निश्रेणिस्त्वधिरोहिणी ६२८
संमार्जनी शोधनी स्यात् संकरोऽवकरस्तया ६२९
क्षिप्ते मुखं निःसरणं संनिवेशो निकर्षणम् ६३०
समौ संवसथग्रामौ वेश्मभूर्वास्तुरस्त्रियाम् ६३१
ग्रामान्त उपशल्यं स्यात्सीमसीमे स्त्रियामुभे ५३२
घोष आभीरपल्ली स्यात् पक्कणः शबरालयः ६३३

इति पुरवर्गः ॥ ४. अथ शैलवर्गः

महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः ६३४
अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ६३५
लोकालोकश्चक्रवालस्त्रिकूटस्त्रिककुत्समौ ६३६

---

हस्तिनख १ सहरका ढोकानेरको वह्लालाको नाम ॥—कपाटम्, अररम्, २ द्वारका नाम त्रि० लि० माछन् ॥—अवष्टम्भकं अर्गलं आगलाका नाम ॥ —आरोहणम्, सोपानम्, २ सिंढीका नाम ॥—निश्रेणिः, अधिरोहिणी, २ भर्‍याङ् खुड्किला ( काठकासिंढीका ) नाम ॥—संमार्जनी, शोधनी २ कुचाका नाम ॥—संकरः, अवकरः २ कँसिगरका नाम ॥—मुखम्, निःसरणम्, २ निकाश तगारका नाम ॥—संनिवेशः, निकर्षणम्, २ पठाङ्गिनीका नाम ॥—संवसथः, ग्रामः, २ गाउका नाम ॥—वेश्मभूः, वास्तुः, २ घडेरीका नाम ॥—ग्रामान्तः ( उपसल्यं ) २ गाउँका छेउका नाम ॥—सीम, सीमा, सीमाका नाम ॥—२ घोषः, आभीरपल्ली, २ अहिरका गाउका नाम ॥—पक्कणः, शबरालयः, २ कुसुण्डाका ग्रामका नाम ॥—

६३४-६४९. महीध्रः, शिखरी, क्ष्माभृत्, अहार्यः, धरः, पर्वतः, अद्रिः, गोत्रः, गिरिः, ग्रावा, अचलः, शैलः, शिलोच्चयः, १३ पर्वत ( पहाड् )का

अस्तस्तु चरमक्ष्माभृदुदयः पूर्वपर्वतः ६३७
हिमवान्निषधो विन्ध्यो माल्यवान् पारियात्रकः ६३८
गन्धमादनमन्ये च हेमकूटादयो नगाः ६३९
पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत् ६४०
कूटोऽस्त्री शिखरं शृङ्गं प्रपातस्त्वतटो भृगुः ६४१
कटकोऽस्त्री नितम्बोऽद्रेः स्नुः प्रस्थः सानुरस्त्रियाम् ६४२
उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः ६४३
दरी तु कंदरो वा स्त्री देवखातबिले गुहा ६४४
गह्वरं गण्डशैलास्तु च्युताः स्थूलोपला गिरेः ६४५
'दन्तकास्तु बहिस्तिर्यक्प्रदेशान्निर्गता गिरेः **

---

नाम ॥—लोकालोकः, चक्रवालः, २ लोकालोक सातद्विपभयेकी पृथ्विलाई घेरेका पहाडका नाम ॥—त्रिकूटः, त्रिककुत्, २ त्रिकूटाचल पर्वतका नाम ॥ अस्तः, चरमक्ष्माभृत् २ अस्ताचल पर्वतका नाम ॥—२ उदयः, पूर्वपर्वतः, २ उदयाचलपर्वतका नाम ॥—हिमवान्; निषधः, विन्ध्यः, माल्यवान्, पारियात्रकः, गन्धमादनः, हेमकूटः, ७ हिमालयपर्वतका नाम ॥—मलय-चित्रकूट-मन्दरादयः आदिपदले मलयः चित्रकूट इत्यादि जान्नु ॥—पाषाणः, प्रस्तरः, ग्रावा, उपलः, अश्मा, शिला, दृषत्, ७ ढुङ्गाका नाम । 'शिलादृषदौ' स्त्री० लि० मा ॥—कूटः, शिखरम्, शृङ्गम्, ३ पर्वतका चुचुराका नाम ॥—प्रपातः, अतटः, भृगुः, ३ भीरका नाम ॥—मध्यभागः कटकः २ पर्वतका माझका नाम ॥—स्नुः, प्रस्थः, सानुः, ३ थुँकाका नाम ॥—पुं० नपुं० माछन् ॥ उत्सः, प्रस्रवणम्, २ छहराखस्ने ठाउका नाम ॥—वारिप्रवाहः, निर्झरः, झरः, ३ छहराका नाम ॥—दरी, कंदरः, २ कृत्रिम बनावटी गुफाका नाम ॥—गुहा, गह्वरम्, २ प्रकृतिसिद्ध गुफाका स्वयंबनेका गुफाका नाम ॥—स्थूलपाषाणः गण्डशैला २ पर्वतवाट

खनिः स्त्रियामाकरः स्यात् पादाः प्रत्यन्तपर्वताः ६४६
उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका ६४७
धातुर्मनःशिलाद्यद्रेर्गैरिकं तु विशेषतः ६४८
निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ६४९

इति शैलवर्गः ॥　५. अथ वनौषधिवर्गः

अटव्यरण्यं विपिनं गहनं काननं वनम् ६५०
महारण्यमरण्यानी गृहारामास्तु निष्कुटाः ६५१
आरामः स्यादुपवनं कृत्रिमं वनमेव यत् ६५२
अमात्यगणिकागेहोपवने वृक्षवाटिका ६५३
पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम् ६५४

---

खसेका ठूला ढुङ्गाका नाम ॥—दन्तकाः १ पहाड्वाट निस्केका दन्ताकार ढुङ्गाको नाम ॥—खनिः, आकरः, २ खानिका नाम ॥—पादाः, प्रत्यन्तपर्वताः, २ ठूला पर्वतका तलरहेका साना साना पर्वतका नाम ॥—अद्रेरधः संनिहिता भूमिरुपत्यका १ पर्वतका नगीचका जमीनको नाम ॥–अधित्यका १ पर्वतका ऊचाजमीनको नाम ॥-अद्रेर्येन्मनः शिलादिस धातु १ धातुको अर्थात् पहाडवाट निस्केका सुन, चादि, तावो हरिताल गेरू अञ्जन सीसा लोहा गन्धक आदि जान्नु । गैरिकं १ गेरुको नाम ॥—निकुञ्जः, कुञ्जः २ लतागृह लहरैलहरालेबनेको कोठाका नाम ॥

६५०–६८६. अटवी, अरण्यम्, विपिनम्, गहनम्, काननम्, वनम्, ६ बनका नाम अटवी, स्त्री० लि० माछ ॥—महारण्यम्, अरण्यानी, २ झाडी ठूलाजङ्गलका नाम । अरण्यानी स्त्री० लि० माछ ॥—गृहारामाः, निष्कुटाः, २ घरका बगैंचा ( नजरवागका ) नाम ॥—आरामः, उपवनम्, २ सामान्य बगैंचाका नाम ॥ अमात्यानां वेश्यानां च यद्गृहोपवनं वृक्षवाटिका, १ मन्त्री र वेश्याका बगैंचाको नाम ॥-आक्रीडः उद्यानम् २

स्यादेतदेव प्रमदवनमन्तःपुरोचितम् ६५५
वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः ६५६
वन्या वनसमूहे स्यादङ्कुरोऽभिनवोद्भिदि ६५७
वृक्षो महीरुहः शाखी विटपी पादपस्तरुः ६५८
अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः ६५९
वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः ६६०
ओषध्यः फलपाकान्ताः स्युरवन्ध्यः फलेग्रहिः ६६१
वन्ध्योऽफलोऽवकेशी च फलवान् फलिनः फली ६६२
प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः ६६३
फुल्लश्चैते विकसिते स्युरवन्ध्यादयस्त्रिषु ६६४

---

युवतीहेरुसित सयलगर्ने राजाको बगैंचाका नाम ॥—प्रमदवनं १ रानीहेरूले शयलगर्नेबगैंचाको नाम ॥—वीथी, आलिः आवलिः, पङ्क्तिः, श्रेणी ५ पङ्क्ति ( लसकर ) का नाम ॥—लेखाः, राजयः, २ पङ्क्तिवद्ध बीचमा न छुटेका लस्करका नाम ॥—वन्या १ वनका समूहको नाम ॥ अङ्कुरः अभिनवोद्भिद् २ अङ्कुरः ( टुसा )का नाम ॥—वृक्षः, महीरुहः, शाखी, विटपी, पादपः, तरुः, अनोकहः, कुटः, शालः, पलाशी, द्रुः, द्रुमः, अगमः, १३ वृक्ष (रूख)का नाम । वानस्पत्यः १ फुलवाटफललाग्ने आम आदि वृक्षको नाम ॥ वनस्पतिः १ नफुली फलफलने डुम्म्री-कटहर-प्रभृतिको नाम । ओषध्यः १ फलपाकेपछि बोटैसुक्ने धान जौ मकै प्रभृतिका नाम ॥— अवन्ध्यः, फलेग्रहिः, २ फल्ने वृक्षहरूका नाम ॥ वन्ध्यः, अफलः, अवकेशी, ३ फलनफल्ने वृक्षहरूका नाम ॥—फलवान्, फलिनः, फली, ३ फललागी रहेका वृक्षहरूका नाम ॥—प्रफुल्लः, उत्फुल्लः, संपुल्लः, व्याकोशः, विकचः, स्फुटः, फुल्लः, ७ फुलिरहेका वृक्षहरूका नाम । अवन्ध्यादयः अवन्ध्यः, अफल इत्यादयो विकसितान्ताः, अवध्यः देखी विकसितसम्मका शब्द त्रिलिङ्गमा-

स्थाणुर्वा ना ध्रुवः शङ्कुर्ह्रस्वशाखाशिफः क्षुपः ६६५
अप्रकाण्डे स्तम्बगुल्मौ वल्ली तु व्रततिर्लता ६६६
लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि ६६७
नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः ६६८
अस्त्री प्रकाण्डः स्कन्ध स्यान्मूलाच्छाखावधिस्तरोः ६६९
समे शाखालते स्कन्धशाखाशाले शिफाजटे ६७०
शाखाशिफाऽवरोहः स्यान्मूलाच्चाग्रं गता लता ६७१
शिरोऽग्रं शिखरं वा ना मूलं बुध्नोऽङ्घ्रिनामकः ६७२
सारो मज्जा नरि त्वक् स्त्री वल्कं वल्कलमस्त्रियाम् ६७३

---

छन् ।।—स्थाणुः, ध्रुवः, शङ्कुः, ३ ठूटावृक्षका नाम । स्थाणुः शब्द विकल्पले पुंलिङ्गमात्र ।।—ह्रस्वे शाखाशिफे यस्य स ह्रस्वशाखाशिफः क्षुपः २ हागा जरा साना हुने वृक्ष ( बूटा )का नाम ।।—न विद्यते प्रकाण्डो यस्य तस्मिन् स्तम्बः, गुल्मः, २ हाँगानहुनेझागिने वृक्षका ।।—वल्ली, व्रततिः, लता, ३ लहराका नाम ।।—वीरुत्, गुल्मिनी, उलपः, ३ आँकुरी लागेर झागिने लहराका नाम । वीरुत् धान्तः छ ।। उच्छ्रायः, उत्सेधः, उच्छ्रयः, ३ वृक्ष पर्वत आदिका उचाईका नाम ।।—प्रकाण्डः, स्कन्धः, २ हाँगाफाटेकोकाप देखी फेदसम्मका भागका नाम ।।—शाखा, लता, २ अरूमाथि फाटेका हाँगाका नाम २ ।। स्कन्धशाखा, शाला, २ मूलहाँगाका नाम ।। शिफा, जटा, २ वृक्षकाजराका नाम ।।—शिखायाः शिफा मूलं अवरोह १: फेददेखी टुप्पासम्म पुगेका जराको । मूलाद्वृक्षमूलमारभ्याग्रपर्यन्तं गता लता गुडूच्यादि रपि अवरोहः १ गुर्जोआदिको पनि नामछ । शिरसोऽग्रं शिरोऽग्रं तत् शिखरः १ टुप्पाका नाम ।।—मूलम्, बुध्नः, अङ्घ्रिनामकः ३ वृक्षका फेदको नाम ।। सारः, मज्जा, २ रूखको सार चुराका नाम । मज्जा, नान्तः पुं० लिं० छ ।। त्वक्, वल्कम्, वल्कम्, ३ बोक्राका नाम । वल्कादिद्वयं क्लीबपुंसो नपुं० पुं०

काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित्स्त्रियाम् ६७४
निष्कुहः कोटरं वा ना वल्लरिर्मञ्जरिः स्त्रियौ ६७५
पत्रं पलाशं छदनं दलं पर्णं छदः पुमान् ६७६
पल्लवोऽस्त्री किसलयं विस्तारो विटपोऽस्त्रियाम् ६७७
वृक्षादीनां फलं सस्यं वृन्तं प्रसवबन्धनम् ६७८
आमे फले शलाटुः स्याच्छुष्के वानमुभे त्रिषु ६७९
क्षारको जालकं क्लीबे कलिका कोरकः पुमान् ६८०
स्याद्गुच्छकस्तु स्तबकः कुड्मलो मुकुलोऽस्त्रियाम् ६८१
स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम् ६८२
मकरन्दः पुष्परसः परागः सुमनोरजः ६८३

---

माछन् ।।—काष्ठम्, दारु, २ काठका नाम ।।—इन्धनम्, एधः, इध्मम्, एधः, समित्, ५ दाउराका नाम । 'एधः' शब्दः सान्तः नपुंमाछ । समित् धान्तः स्त्री लिङ्गः ।।—निष्कुहः, कोटरम्, २ टोडकाका नाम । कोटरं १ पक्षे पुंलिङ्गमाछ।।—वल्लरिः मञ्जरिः, २ मञ्जरीका नाम ।।—पत्रम्, पलाशम्, छदनम्, दलम्, पर्णम्, छदः, ६ पातका नाम ।। छदोऽदन्तः पुंलिङ्गमाछ ।।—पल्लवः किसलयम्, २ पालुवाका नाम । किसलयं पुंलिङ्ग नपुं० पनिछ ।।—विस्तारः विटप २ वृक्षका फैलावटका नाम ।।—वृक्षादीनां फलं सस्यं १ सामान्य फलको नाम । वृन्तं प्रसवबन्धनं २ भेटनाका नाम । शलाटु आमफलम् २ काँचाफलका नाम । शुष्कफलम् वानं २ सुकेका फलका नाम ।। शलाटुर्वानं २ शब्दतिनलिङ्गमाछन् ।। क्षारकः, जालकम्, २ सानु नयाँ कोपिलका नाम । जालकं न.पुं.माछ ।।—कलिका, कोरकः, २ सामान्य कोपिलाका नाम ।।—गुच्छकः, स्तबकः, २ सामान्य कोपिला ( झुप्पा ) गुच्छाका नाम ।।—कुड्मलः, मुकुलः, २ फुल्नलागेका कोपिलाका नाम ।।—सुमनसः, पुष्पम्, प्रसूनम्,

द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियाम् ६८४
आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं फले ६८५
बार्हतं च फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम् ६८६
पुष्पे जातीप्रभृतयः स्वलिङ्गा व्रीहयः फले ६८७
विदार्याद्यास्तु मूलेऽपि पुष्पे क्लीबेऽपि पाटला ६८८
बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः ६८९
अश्वत्थेऽथ कपित्थे स्युर्दधित्थग्राहिमन्मथाः ६९०
तस्मिन्दधिफलः पुष्पफलदन्तशठावपि ६९१

---

कुसुमम्, सुमम्, ५ फूलका नाम ॥—मकरन्दः, पुष्परसः, २ फुलका रसका नाम ॥—परागः, सुमनोरजः २ फुलका धूलाका नाम । अवउप्रान्त कहिने वनौषधिवाचक अश्वकादि शब्द फलफुल मूललाई कँहदा नपुंसकलिङ्ग हुन्छन् केवल वृक्ष वाचकभयेमा मात्र देखायेका लिङ्गमा हुन्छन् ॥ अश्वत्थस्य फलं आश्वत्थम् १ पिपलका फलको । वेणोः फलं वैणवम् १ बाँसका फलको । प्लक्षस्य फलं प्लाक्षम् १ पाखरीका फलको ॥ न्यग्रोधस्य फलं नैयग्रोधम् । १ बरका फलको । इङ्गुद्याः फलं ऐङ्गुदम् १ चिउरीका फलको ॥ बृहत्याः फलं बार्हतम् १ बिहिका फलको ॥—जम्बूः, जम्बु, जाम्बवम्, ३ जामुनाका फलका । जम्बूः स्त्री मात्र ॥—परन्तु हरीतकी प्रभृति शब्दता फल, फूल, मूल, वृक्ष जेलाई कहँदामा पनि स्त्रीलिङ्ग हुन्छन् जाति यूथिका मल्लिका आदि गरेका शब्द पुष्पवाचक भये पनि स्त्री लिङ्ग हुन्छन् ॥ विदारी बृहत्यंशुमती विदारी, अँशुमती, आदि पनि स्वलिङ्ग छन् धान्यवाचक ब्रीहि आदि शब्द फलवाचक भये पनि पुलिङ्गै रहन्छन् ॥ पाटला फूलवाचक भयेमा नपुंसकलिङ्ग र स्त्रीलिङ्गछ ॥ —बोधिद्रुमः, चलदलः, पिप्पलः, कुञ्जराशनः, अश्वत्थः, ५ पिपलका नाम ॥—कपित्थः, दधित्थः, ग्राही, मन्मथः, दधिफलः, पुष्पफलः, दन्तशठः, ७ कैथका

उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ६९२
कोविदारे चमरिकः कुद्दालो युगपत्रकः ६९३
सप्तपर्णो विशालत्वक् शारदो विषमच्छदः ६९४
आरग्वधे राजवृक्षशम्पाकचतुरङ्गुलाः ६९५
आरेवतव्याधिघातकृतमालसुवर्णकाः ६९६
स्युर्जम्बीरे दन्तशठजम्भजम्भीरजम्भलाः ६९७
वरुणो वरणः सेतुस्तिक्तशाकः कुमारकः ६९८
पुंनागे पुरुषस्तुङ्गः केसरो देववल्लभः ६९९
पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः ७००
तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तकः ७०१
वञ्जुलश्चित्रकृच्चाथ द्वौ पीतनकपीतनौ ७०२
आम्रातके मधूके तु गुडपुष्पमधुद्रुमौ ७०३
वानप्रस्थमधुष्ठीलौ जलजेऽत्र मधूलकः ७०४

---

नाम ॥—उदुम्बरः, जन्तुफलः, यज्ञाङ्गः, हेमदुग्धकः, ४ डुम्रीका नाम ॥—कोविदारः, चमरिकः, कुद्दालः, युगपत्रकः, ४ कोईरालाका नाम ॥—सप्तपर्णः, विशालत्वक्, शारदः, विषमच्छदः, ४ छतिवनका नाम ॥ आरग्वधः, राजवृक्षः, शम्पाकः, चतुरङ्गुलः, आरेवतः, व्याधिघातः, कृतमालः, सुवर्णकः, ८ राज वृक्षका नाम ॥—जम्बीरः, दन्तशठः, जम्भः, जम्भीरः, जम्भलः, ५ ज्यामिर-का नाम ॥ वरुणः, वरणः, सेतुः, तिक्तशाकः, कुमारकः, ५ सिप्लिकानका नाम ॥—पुंनागः, पुरुषः, तुङ्गः, केसरः, देववल्लभः, ५ चिलाउनेका नाम ॥—पारिभद्रः, निम्बतरुः, मन्दारः, पारिजातकः, ४ बकाइनाका नाम ॥—तिनिशः, स्यन्दनः, नेमी, रथद्रुः, अतिमुक्तकः, वञ्जुलः, चित्रकृत्, ७ साँधन-का नाम ॥ पीतनः, कपीतनः, आम्रातकः, ३ अँमाराका नाम ॥—मधूकः,

पीलौ गुडफलः स्रंसी तस्मिंस्तु गिरिसंभवे ७०५
अक्षोटकन्दरालौ द्वावङ्कोटे तु निकोचकः ७०६
पलाशे किंशुकः पर्णो वातपोथोऽथ वेतसे ७०७
रथाभ्रपुष्पविदुरशीतवानीरवञ्जुलाः ७०८
द्वौ परिव्याधविदुलौ नादेयी चाम्बुवेतसे ७०९
शोभाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः ७१०
रक्तोऽसौ मधुशिग्रुः स्यादरिष्टः फेनिलः समौ ७११
बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि ७१२
प्लक्षो जटी पर्कटी स्यान्न्यग्रोधो बहुपाद्वटः ७१३
गालवः शाबरो लोध्रस्तिरीटस्तिल्वमार्जनौ ७१४
आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः ७१५

गुडपुष्पः, मधुद्रुमः, वानप्रस्थः, मधुष्ठीलः, ५ महुवाका नाम ॥ मधूलकः १ पानीमा हुने महुवाका नाम ॥—पीलुः, गुडफलः, स्रंसी, ३ दाँते ओखर-का नाम ॥ अक्षोटः, कन्दरालः, २ साधारण र पाहाडे ओखरका नाम ॥ —अङ्कोटः, निकोचकः, २ हिन्दीमा ढेला, नेपालीमा अङ्कोलका नाम ॥— पलाशः, किंशुकः, पर्णः, वातपोथः, ४ पलाँसका नाम ॥—वेतसः, रथः, अभ्रपुष्पः, विदुरः, शीतः, वानीरः, वञ्जुलः, ७ वेतका नाम ॥—परिव्याधः, विदुलः, नादेयी, अम्बुवेतसः, ४ जलमा हुने पानीवेतका नाम ॥ नादेयी स्त्रीलिङ्ग छ ॥—शोभाञ्जनः, शिग्रुः तीक्ष्णगन्धकः, अक्षीवः, मोचकः, ५ स्वैजन ( सहेजन ) का नाम ॥—असौ शोभाञ्जनो रक्तो रक्तपुष्पश्चेत् मधुशिग्रुः १ रातो सहेजनको नाम ॥—अरिष्टः, फेनिलः, २ रिठाका नाम ॥—बिल्वः, शाण्डिल्यः, शैलूषः, मालूरः, श्रीफलः, ५ वेलका नाम ॥—प्लक्षः, जटी, पर्कटी, ३ पाखरीका नाम ॥ न्यग्रोधः, बहुपात्, वटः, ३ वटवृक्ष (बर) का नाम ॥ —गालवः, शावरः, लोध्रः, तिरीटः, तिल्वः, मार्जनः, ६ सेता लोधका

कुम्भोलूखलकं क्लीबे कौशिको गुग्गुलुः पुरः ७१६
शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ७१७
राजादनं प्रियालः स्यात् सन्नकद्रुर्धनुःपटः ७१८
गम्भारी सर्वतोभद्रा काश्मरी मधुपर्णिका ७१९
श्रीपर्णी भद्रपर्णी च काश्मर्यश्चाप्यथ द्वयोः ७२०
कर्कन्धूर्बदरी कोलिः कोलं कुवलफेनिले ७२१
सौवीरं बदरं घोण्टाऽप्यथ स्यात् स्वादुकण्टकः ७२२
विकङ्कतः स्रुवावृक्षो ग्रन्थिलो व्याघ्रपादपि ७२३
ऐरावतो नागरङ्गो नादेयी भूमिजम्बुका ७२४
तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके ७२५
काकेन्दुः कुलकः काकतिन्दुकः काकपीलुके ७२६

---

नाम ।।-आम्रः, चूतः, रसालः, ३ आँपका नाम । असौ आम्रोऽतिसौरभश्चेत् सहकारः, १ ज्यादा वास्ना आउने अत्यन्त मीठा आँपका नाम ।।—कुम्भः, उलूखलकम्, कौशिकः, गुग्गुलुः, पुरः, ५ गुग्गुल ( गोकुलधुपका ) नाम ।। शेलुः, श्लेष्मातकः, शीतः, उद्दालः, बहुवारकः ५ बोहरीका नाम ।। राजादनम् प्रियालः, सन्नकद्रुः, धनुः पटः, ४ चिरौंजीका नाम ।।—गम्भारी, सर्वतोभद्रा, काश्मरी, मधुपर्णिका, श्रीपर्णी, भद्रपर्णी, काश्मर्यः, ७ खमारीका नाम ।।—कर्कन्धूः, बदरी, कोलिः, ३ बयर वृक्षका नाम ।। कोलम्, कुवलम्, फेनिलम्, सौवीरम्, बदरम्, घोण्टा, ६ बयरका फलका नाम ।।—स्वादुकण्टकः विकङ्कतः, स्रुवावृक्षः, ग्रन्थिलः, व्याघ्रपात्, ५ काँगिया वृक्षका नाम ।।—ऐरावतः, नागरङ्गः, नादेयी, भूमिजम्बुका, ४ सुन्तलाका नाम ।।—तिन्दुकः, स्फूर्जकः, कालस्कन्धः, शितिसारकः, ४ पानी जामुन तिन्दुका नाम ।।—काकेन्दुः, कुलकः, काकतिन्दुकः, काकपीलुकः, ४ कुचिलाका नाम ।।—

गोलीढो झाटलो घण्टापाटलिर्मोक्षमुष्ककौ ७२७
तिलकः क्षुरकः श्रीमान् समौ पिचुलझावुकौ ७२८
श्रीपर्णिका कुमुदिका कुम्भी कैडर्यकट्फलौ ७२९
क्रमुकः पट्टिकाख्यः स्यात् पट्टी लाक्षाप्रसादनः ७३०
तूदस्तु यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु च ७३१
तूलं च नीपप्रियककदम्बास्तु हलिप्रियः ७३२
वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु ७३३
गर्दभाण्डे कन्दरालकपीतनसुपार्श्वका ७३४
प्लक्षश्च तिन्तिडी चिञ्चाऽम्लिकाऽथो पीतसारके ७३५
सर्जकासनबन्धूकपुष्पप्रियकजीवकाः ७३६
साले तु सर्जकार्श्याश्वकर्णकाः सस्यसम्बरः ७३७
नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः ७३८

---

गोलीढः, झाटलः, घण्टापाटलिः, मोक्षः, मुष्ककः ५ पाँडर ( मोखा ) काला पाडरीका नाम ॥—तिलकः, क्षुरकः, श्रीमान्, ३ तिलकेका नाम ॥—पिचुलः, झावुकः, २ झ्याउका नाम ॥—श्रीपर्णिका, कुमुदिका, कुम्भी, कैडर्यः, कट्फलः, ५ काफलका नाम ॥—क्रमुकः, पट्टिकाख्यः, पट्टी, लाक्षाप्रसादनः, ४ राता लोध्रवृक्षका नाम ॥—तूदः, यूपः, क्रमुकः, ब्रह्मण्यः, ब्रह्मदारु, तूलम्, ६ तूत ( किम्बूका ) नाम ॥ नीपः, प्रियकः, कदम्बः, हलिप्रियः, ४ कदमका नाम ॥ वीरवृक्षः अरुष्करः अग्निमुखी, भल्लातकी, ४ भलायोका नाम। स्त्रीपुंनपुंसकमाछन् ॥—गर्दभाण्डः, कन्दरालः कपीतनः, सुपार्श्वकः, प्लक्षः ५ पहेलोफूलने ( लाही पीपल )का नाम ॥—तिन्तिडी, चिञ्चा, अम्लिका, ३ अमिली ( तित्री )का नाम ॥—पीतसारकः, सर्जकः, असनः, बन्धूकपुष्पः प्रियकः, जीवकः, ६ विजयसाल वृक्षका नाम ॥—सालः, सर्जः, कार्श्यः, अश्वकर्णकः, सस्यसम्बरः, ५ सखुवा ( साल ) का नाम ॥—नदीसर्जः,

राजादनः फलाध्यक्षः क्षीरिकायामथ द्वयोः ७३९
इङ्गुदी तापसतरुर्भूर्जे चर्मिमृदुत्वचौ ७४०
पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः ७४१
पिच्छा तु शाल्मलीवेष्टे रोचनः कूटशाल्मलिः ७४२
चिरबिल्वो नक्तमालः करजश्च करञ्जके ७४३
प्रकीर्यः पूतिकरजः पूतिकः कलिमारकः ७४४
करञ्जभेदाः षड्ग्रन्थो मर्कट्यङ्गारवल्लरी ७४५
रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ७४६
गायत्री बालतनयः खदिरो दन्तधावनः ७४७
अरिमेदो विट्खदिरे कदरः खदिरे सिते ७४८
सोमवल्कोऽप्यथ व्याघ्रपुच्छगन्धर्वहस्तकौ ७४९

---

वीरतरुः, इन्द्रद्रुः, ककुभः, अर्जुनः, ५ खरीका नाम ॥—राजादनः, फलाध्यक्षः, क्षीरिका, ३ खिर्नी (खिर्रा) का नाम ॥—इङ्गुदी, तापसतरुः २ चिउरीको नाम ॥—भूर्जः, चर्मी, मृदुत्वक्, ३ भुर्जपातका नाम ॥—पिच्छिला, पूरणी, मोचा, स्थिरायुः, शाल्मलिः, ५ सिमलका नाम ॥ स्त्रीलिङ्ग पुंलिङ्ग छन् ॥—शाल्मल्या वेष्टे निर्यासे पिच्छा १ शिमलका खोटाका नाम ॥—रोचनः, कूटशाल्मलिः, २ काला शिमलका नाम ॥—चिरबिल्वः, नक्तमालः, करजः, करञ्जकः, ४ करञ्ज ( कुवेराक्षका ) नाम ॥—प्रकीर्यः, पूतिकरजः, पूतिकः, कलिमारकः, ४ लेखमा हुने पाँग्राका नाम ॥—षड्ग्रन्थः, मर्कटी, अङ्गारवल्लरी, ३ पाङ्ग्राका ३ भेदका नाम ॥—रोही, रोहितकः, प्लीहशत्रुः, दाडिमपुष्पकः, ४ गुराँसका नाम ॥ गायत्री, बालतनयः, खदिरः, दन्तधावनः, ४ खयरका नाम ॥ अरिमेदः, विट्खदिरः, २ गँह्राउने खयर विशेषका नाम ॥—कदरः, सोमवल्कः, २ सेताखयरका नाम ॥—

एरण्ड उरुबूकश्च रुचकश्चित्रकश्च सः ७५०
चञ्चुः पञ्चाङ्गुलो मण्डवर्धमानव्यडम्बकाः ७५१
अल्पा शमी शमीरः स्याच्छमी सक्तुफला शिवा ७५२
पिण्डीतको मरुबकः श्वसनः करहाटकः ७५३
शल्यश्च मदने शक्रपादपः पारिभद्रकः ७५४
भद्रदारु द्रुकिलिमं पीतदारु च दारु च ७५५
पूतिकाष्ठं च सप्त स्युर्देवदारुण्यथ द्वयोः ७५६
पाटलिः पाटलाऽमोघा काचस्थाली फलेरुहा ७५७
कृष्णवृन्ता कुबेराक्षी श्यामा तु महिलाह्वया ७५८
लता गोवन्दिनी गुन्द्रा प्रियङ्गुः फलिनी फली ७५९
विष्वक्सेना गन्धफली कारम्भा प्रियकश्च सा ७६०
मण्डूकपर्णपत्रोर्णनटकट्वङ्गटुण्टुकाः ७६१
स्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः ७६२

---

व्याघ्रपुच्छः, गन्धर्वहस्तकः, एरण्डः, उरुबूकः, रुचकः, चित्रकः, चञ्चुः, पञ्चाङ्गुलः, मण्डः, वर्धमानः, व्यडम्बकः, ११ अडिरका नाम ॥ शमीरः १ साना समीको नाम ॥—शमी, सक्तुफला, शिवा, ३ सामान्य समीका नाम ॥—पिण्डीतकः, मरुबकः, श्वसनः, करहाटकः, शल्यः, मदनः, ६ मैंदल (मैनकाँडो) मैनफलका नाम ॥—शक्रपादपः, पारिभद्रकः, भद्रदारु, द्रुकिलिमम्, पीतदारु, दारु, पूतिकाष्ठम्, ७ देवदारु ( देवार ) का नाम ॥—पाटलिः, पाटला, अमोघा, काचस्थाली, फलेरुहा, कृष्णवृन्ता, कुबेराक्षी, ७ पाटली (पाडरीका) नाम ॥—तत्र पाटलिर्द्वयोः स्त्रीपुंमाछ ॥—श्यामा, महिलाह्वया, लता, गोवन्दिनी, गुन्द्रा, प्रियङ्गुः, फलिनी, फली, विष्वक्सेना, गन्धफली, कारम्भा, प्रियकः, १२ दहिगुँहेलाका नाम ॥—प्रियकः पुंलिङ्गमा छ ॥—वाकि स्त्रीलिङ्गमा छन् ॥—मण्डूकपर्णः, पत्रोर्णः, नटः, कट्वङ्गः, टुण्टुकः, स्योनाकः, शुकनासः,

शोणकश्चारलौ तिष्यफला त्वामलकी त्रिषु ७६३
अमृता च वयस्था च त्रिलिङ्गस्तु बिभीतकः ७६४
नाक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ७६५
अभया त्वव्यथा पथ्या कायस्था पूतनाऽमृता ७६६
हरीतकी हैमवती चेतकी श्रेयसी शिवा ७६७
पीतद्रुः सरलः पूतिकाष्ठं चाथ द्रुमोत्पलः ७६८
कर्णिकारः परिव्याधो लकुचो लिकुचो डहुः ७६९
पनसः कण्टकिफलो निचुलो हिज्जलोऽम्बुजः ७७०
काकोदुम्बरिका फल्गुर्मलयूर्जघनेफला ७७१
अरिष्टः सर्वतोभद्रहिङ्गुनिर्यासमालकाः ७७२
पिचुमन्दश्च निम्बेऽथ पिच्छिलाऽगुरुशिंशपा ७७३

---

ऋक्षः, दीर्घवृन्तः, कुटन्नटः, शोणकः, अरलुः, १२ टटेलाका नाम ॥—तिष्यफला, आमलकी, अमृता, वयस्था, ४ अमलाका नाम ॥ आमलकः, आमलकम्, पुंलिङ्ग र नपुंसकमा पनि छन् ॥—बिभीतकः, अक्षः, तुषः, कर्षफलः, भूतावासः, कलिद्रुमः, ६ बर्राका नाम ॥ त्रिलिङ्गमा छ ॥—विभीतकी बिभीतकः, बिभीतकं, यस्तोरूपपनि हुन्छ ॥-अभया, अव्यथा, पथ्या, कायस्था, पूतना, अमृता, हरीतकी, हैमवती, चेतकी, श्रेयसी, शिवा, ११ हर्राका नाम ॥ पीतद्रुः, सरलः, पूतिकाष्ठम्, ३ सल्लाका नाम ॥—द्रुमोत्पलः, कर्णिकारः, परिव्याधः, ३ काठेचाँपका नाम ॥—लकुचः, लिकुचः डहुः, ३ बडहरका नाम ॥—पनसः, कण्टकिफलः, २ कटहरका नाम ॥—निचुलः, हिज्जलः, अम्बुजः, ३ भञ्चिवेत ( पानीवेत ) का नाम ॥—काकोदुम्बरिका, फल्गुः, मलयूः, जघनेफला, ४ काठे डुम्रीका नाम ॥—अरिष्टः, सर्वतोभद्रः, हिङ्गुनिर्यासः, मालकः, पिचुमन्दः, निम्बः, ६ नीमका नाम ॥—पिच्छिला, अगुरुः,

कपिला भस्मगर्भा सा शिरीषस्तु कपीतनः ७७४
भण्डिलोऽप्यथ चाम्पेयश्चम्पको हेमपुष्पकः ७७५
एतस्य कलिका गन्धफली स्यादथ केसरे ७७६
बकुलो वञ्जुलोऽशोके समौ करकदाडिमौ ७७७
चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः ७७८
जया जयन्ती तर्कारी नादेयी वैजयन्तिका ७७९
श्रीपर्णमग्निमन्थः स्यात् कणिका गणिकारिका ७८०
जयोऽथ कुटजः शक्रो वत्सको गिरिमल्लिका ७८१
एतस्यैव कलिङ्गेन्द्रयवभद्रयवं फले ७८२
कृष्णापाकफलाविग्नसुषेणाः करमर्दके ७८३
कालस्कन्धस्तमालः स्यात्तापिच्छोऽप्यथ सिन्दुके ७८४

---

शिंशपा, कपिला, भस्मगर्भा, ४ सीसौका नाम ॥ अगुरु इति पृथक् पदपनिछ ॥ —शिरीषः, कपीतनः, भण्डिलः, ३ शिरिसका नाम ॥—चाम्पेयः, चम्पकः, हेमपुष्पकः, ३ चौंपका नाम ॥—एतस्य चम्पकस्य कलिका गन्धफली १ चौंपका कोपिलाका नाम ॥—केसरः, बकुलः, २ मौल्सरीका नाम ॥—वञ्जुलः, अशोकः, २ अशोकका नाम ॥—करकः, दाडिमः, २ दारिमका नाम ॥—चाम्पेयः, केसरः, नागकेसरः, काञ्चनाह्वयः, ४ नागकेसरका नाम ॥ —जया, जयन्ती, तर्कारी, नादेयी, वैजयन्तिका, ५ वज्रदन्तीका नाम ॥—श्रीपर्णम्, अग्निमन्थः, कणिका, गणिकारिका, जयः, ५ गिनेरीका नाम ॥—कुटजः, शक्रः, वत्सकः, गिरिमल्लिका, ४ ठूला कुराको नाम ॥—एतस्यैव कुटजस्य फले कलिङ्गम्, इन्द्रयवम्, भद्रयवम्, ३ ठूलाकुराका ( फल ) बीज, दानाका ३ नाम ॥—कृष्णापाकफलः, अविग्नः, सुषेणः, करमर्दकः, ४ पनेरू ( करवन ) का नाम ॥—कालस्कन्धः, तमालः, तापिच्छः, ३ तमालका

सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि ७८५
वेणी खरा गरी देवताडो जीमूत इत्यपि ७८६
श्रीहस्तिनी तु भूरुण्डी तृणशून्यं तु मल्लिका ७८७
भूपदी शीतभीरुश्च सैवास्फोटा वनोद्भवा ७८८
शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा ७८९
सिताऽसौ श्वेतसुरसा भूतवेश्यथ मागधी ७९०
गणिका यूथिकाऽम्बष्ठा सा पीता हेमपुष्पिका ७९१
अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता ७९२
सुमना मालती जातिः सप्तला नवमालिका ७९३
माध्यं कुन्दं रक्तकस्तु बन्धूको बन्धुजीवकः ७९४
सहा कुमारी तरणिरम्लानस्तु महासहा ७९५

---

नाम ॥—सिन्दुकः, सिन्दुवारः, इन्द्रसुरसः, निर्गुण्डी, इन्द्राणिका, ५ सीवाँली-का नाम ॥—वेणी, खरा, गरी, देवताडः, जीमूतः, ५ सानुवन तोरियाँका नाम ॥—श्रीहस्तिनी, भूरुण्डी, २ हातिका कान जस्ता पात हुने भूरूणी शागका नाम ॥—तृणशून्यम्, मल्लिका, भूपदी, शीतभीरुः, ४ बेली फूलका नाम ॥—माल्लिका वनोद्भवा आस्फोटा ३ वन बेलीका नाम ॥—शेफालिका, सुवहा, निर्गुण्डी, नीलिका, ४ नेवारी फूलका नाम ॥ भूतवेशी, १ सेता नेवारीको नाम ॥—मागधी, गणिका, यूथिका, अम्बष्ठा, ४ जुहिका नाम ॥ सा यूथिका पीता पीतपुष्पा चेत् हेमपुष्पिका १ पहेला जुहीका नाम ॥—अतिमुक्तः, पुण्ड्रकः वासन्ती, माधवी, लता, ५ वासन्तीका नाम ॥—सुमनाः, मालती, जातिः, ३ चमेलीका नाम । सुमनाः सान्तः हो ॥—सप्तला ॥—नवमालिका, २ सुकुन्दराज ( वसनी नेवारी )का नाम ॥—माध्यम्, कुन्दम्, २ कुन्दका नाम ॥—रक्तकः, बन्धूकः बन्धुजीवकः, ३ दोपहरियाका नाम ॥—सहा, कुमारी, तरणिः, ३ घिउ कुमारीका नाम ॥—अम्लानः,

तत्र शोणे कुरबकस्तत्र पीते कुरण्टकः ७९६
नीली झिण्टी द्वयोर्बाणा दासो चार्तगलश्च सा ७९७
सैरेयकस्तु झिण्टी स्यात्तस्मिन् कुरबकोऽरुणे ७९८
पीता कुरण्टको झिण्टी तस्मिन् सहचरी द्वयोः ७९९
ओण्ड्रपुष्पं जपापुष्पं वज्रपुष्पं तिलस्य यत् ८००
प्रतिहासशतप्रासचण्डातहयमारकाः ८०१
करवीरे करीरे तु क्रकरग्रन्थिलावुभौ ८०२
उन्मत्तः कितवो धूर्तो धत्तूरः कनकाह्वयः ८०३
मातुलो मदनश्चास्य फले मातुलपुत्रकः ८०४
फलपूरो बीजपूरो रुचको मातुलुङ्गके ८०५
समीरणो मरुबकः प्रस्थपुष्पः फणिज्झकः ८०६

---

महासहा, २ कठसरैयाका नाम ॥—शोणे रक्ते कुरबकः १ रातो कठसरैयाको नाम ॥—पीतवर्णे कुरण्टकः १ पहेलोकठसरैयाको नाम ॥—नीलवर्णा या झिण्टी बाणा, दासी, आर्तगलः, ३ कालाकटसरैयाका नाम ॥—सैरेयकः, झिण्टी, २ सामान्य कपुरनलिका नाम ॥ कुरबकः १ रातो कपुरनलिको नाम ॥—पीतपुष्पा झिण्टी कुरण्टकः, ३ पहेलाकपुरनलीका नाम । तस्मिन्कुरण्टके सहचरी सहचरः, २ पहेलो कपुर नलीका २ भेदछन् ॥—ओण्ड्र-पुष्पम्, जपापुष्पम्, २ बारहमासेका नाम ॥—यत्तिलस्य पुष्पं तद्वज्रपुष्पं १ तिलका फुलको नाम ॥—प्रतिहासः, शतप्रासः, चण्डातः, हयमारकः, करवीरः, ५ करवीरका नाम ॥—करीरः, क्रकरः, ग्रन्थिलः, ३ करीर (करिली) का नाम ॥—उन्मत्तः, कितवः, धूर्तः, धत्तूरः, कनकाह्वयः, मातुलः, मदनः, ७ धतुराका वृक्षका नाम । अस्य धत्तूरस्य फले मातुलपुत्रकः १ धतुराका फलको नाम ॥—फलपूरः, बीजपूरः, रुचकः, मातुलुङ्गकः, ४ बिबिराका नाम ॥—समीरणः, मरुबकः, प्रस्थपुष्पः, फणिज्झकः, जम्बीरः, ५ मरूवाका नाम ॥—

जम्बीरोऽप्यथ पर्णासे कठिञ्जरकुठेरकौ ८०७
सितेऽर्जकोऽत्र पाठी तु चित्रको वह्निसंज्ञकः ८०८
अर्काह्ववसुकास्फोटगणरूपविकीरणाः ८०९
मन्दारश्चार्कपर्णोऽत्र शुक्लेऽलर्कप्रतापसौ ८१०
शिवमल्ली पाशुपत एकाष्ठीलो बुको वसुः ८११
वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि ८१२
वत्सादनी छिन्नरुहा गुडूची तन्त्रिकाऽमृता ८१३
जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि ८१४
मूर्वा देवी मधरसा मोरटा तेजनी स्रुवा ८१५
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ८१६
पाठाऽम्बष्ठा विद्धकर्णी स्थापनी श्रेयसी रसा ८१७
एकाष्ठीला पापचेली प्राचीना वनतिक्तिका ८१८
कटुः कटंभराऽशोकरोहिणी कटुरोहिणी ८१९

---

पर्णासः, कठिञ्जरः, कुठेरकः, ३ काला बावरीका नाम ॥—पर्णासे सिते काण्ड-पुष्पाभ्यां श्वेते अर्जकः १ सेतो बाबरीका नाम ॥—पाठी, चित्रकः, वह्निसंज्ञकः, ३ चितुका नाम ॥—अर्काह्वः, वसुकः, आस्फोटः, गणरूपः, विकीरणः, मन्दारः, अर्कपर्णः, ७ आँकका नाम ॥—शुक्ले-अलर्कः, प्रतापसः, २ सेता आँकका नाम ॥—शिवमल्ली, पाशुपतः, एकाष्ठीलः, बुकः, वसुः, ५ गुमपातिका नाम ॥—वन्दा, वृक्षादनी, वृक्षरुहा, जीवन्तिका, ४ ऐमेरुका नाम ॥—वत्सादनी, छिन्नरुहा, गुडुची, तन्त्रिका, अमृता, जीवन्तिका, सोमवल्ली, विशल्या, मधुपर्णी, ९ गुर्जाका नाम ॥—मूर्वा, देवी, मधुरसा, मोरटा, तेजनी, स्रुवा, मधूलिका, मधुश्रेणी, गोकर्णी, पीलुपर्णी, १० मरूई लहराका नाम ॥—पाठा, अम्बष्ठा, विद्धकर्णी, स्थापनी, श्रेयसी, रसा, एकाष्ठीला, पापचेली, प्राचीना, वनतिक्तिका,

मत्स्यपित्ता कृष्णभेदी चक्राङ्गी शकुलादनी ८२०
आत्मगुप्ताऽजहाऽव्यण्डा कण्डुरा प्रावृषायणी ८२१
ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छुश्च मर्कटी ८२२
चित्रोपचित्रा न्यग्रोधी द्रवन्ती शम्बरी वृषा ८२३
प्रत्यक्श्रेणी सुतश्रेणी रण्डा मूषिकपर्ण्यपि ८२४
अपामार्गः शैखरिको धामार्गवमयूरकौ ८२५
प्रत्यक्पर्णी केशपर्णी किणिही खरमञ्जरी ८२६
हञ्जिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ८२७
अङ्गारवल्ली बालेयशाकबर्बरवर्धकाः ८२८
मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका ८२९
मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि ८३०
यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ८३१
रोदनी कच्छुराऽनन्ता समुद्रान्ता दुरालभा ८३२

---

१० गुधेर्गानु ( बाटुल पाते ) का नाम ॥ कटुः, कटम्भरा, अशोकरोहिणी, कटुरोहिणी, मत्स्यपित्ता, कृष्णभेदी, चक्राङ्गी, शकुलादनी, ८ पिर्रैका नाम ॥— आत्मगुप्ता, अजहा, अव्यण्डा, कण्डुरा, प्रावृषायणी, ऋष्यप्रोक्ता, शूकशिम्बिः, कपिकच्छुः, मर्कटी, ९ काउछाका नाम ॥—चित्रा, उपचित्रा, न्यग्रोधी, द्रवन्ती, शम्बरी, वृषा, प्रत्यक्श्रेणी, सुतश्रेणी, रण्डा, मूषिकपर्णी, १० मूषकपर्णी ( मुषलिण्डीका नाम ॥—अपामार्गः, शैखरिकः, धामार्गवः, मयूरकः, प्रत्यक्पर्णी, केशपर्णी, किणिही, खरमञ्जरी, ८ अपामार्गका नाम ॥—हञ्जिका, ब्राह्मणी, पद्मा, भार्गी, ब्राह्मणयष्टिका, अङ्गारवल्ली, बालेयशाकः, बर्बरः, वर्धकः, ९ भारङ्गीका नाम ॥—मञ्जिष्ठा, विकसा, जिङ्गी, समङ्गा, कालमेषिका, मण्डूकपर्णी, भण्डीरी, भण्डी, योजनवल्ली, ९ मजिटाका नाम ॥—यासः, यवासः,

पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिवल्लिका ८३३
क्रोष्टुविन्ना सिंहपुच्छी कलशिर्धावनिर्गुहा ८३४
निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका ८३५
प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि ८३६
नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ८३७
रञ्जनी श्रीफली तुत्था द्रोणी दोला च नीलिनी ८३८
अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका ८३९
कालमेषी कृष्णफला बाकुची पूतिफल्यपि ८४०
कृष्णोपकुल्या वैदेही मागधी चपला कणा ८४१
उषणा पिप्पली शौण्डी कोलाऽथ करिपिप्पली ८४२
कपिवल्ली कोलवल्ली श्रेयसी वशिरः पुमान् ८४३
चव्यं तु चविका काकचिञ्चीगुञ्जे तु कृष्णला ८४४

---

दुःस्पर्शः, धन्वयासः, कुनाशकः, रोदनी, कच्छुरा, अनन्ता, समुद्रान्ता, दुरालभा, १० जवासा ( शिस्ना ) का भेद विशेषका नाम ॥—पृश्निपर्णी, पृथक्पर्णी, चित्रपर्णी, अङ्घ्रिवल्लिका, क्रोष्टुविन्ना, सिंहपुच्छी, कलशिः धावनिः, गुहा, ९ चाल्ने सिस्नाका नाम ॥—निदिग्धिका, स्पृशी, व्याघ्री, बृहती, कण्टकारिका, प्रचोदनी, कुली, क्षुद्रा, दुःस्पर्शा, राष्ट्रिका, १० बिंहीका नाम ॥—नीली, काला, क्लीतकिका, ग्रामीणा, मधुपर्णिका, रञ्जनी, श्रीफली, तुत्था, द्रोणी, दोला, नीलिनी, ११ नीर ( रङ्ग बन्ने बुटी ) का नाम ॥—अवल्गुजः, सोमराजी, सुवल्लिः, सोमवल्लिका, कालमेषी, कृष्णफला, बाकुची, पूतिफली, ८ बकुची का नाम ॥—कृष्णा, उपकुल्या, वैदेही, मागधी, चपला, कणा, उषणा, पिप्पली, शौण्डी, कोला, १० पिपलाका नाम ॥—करिपिप्पली, कपिवल्ली, कोलवल्ली, श्रेयसी, वशिरः, ५ गज पिप्पलीका नाम ॥—चव्यम्, चविका, २ चाँमाका

पलंकषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः ८४५
गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ८४६
विश्वा विषा प्रतिविषाऽतिविषोपविषाऽरुणा ८४७
शृङ्गी महौषधं चाथ क्षीरावी दुग्धिका समे ८४८
शतमूली बहुसुताऽभीरुरिन्दीवरी वरी ८४९
ऋष्यप्रोक्ताऽभीरुपत्रीनारायण्यः शतावरी ८५०
अहेरुरथ पीतद्रुकालीयकहरिद्रवः ८५१
दार्वी पचंपचा दारुहरिद्रा पर्जनीत्यपि ८५२
वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका ८५३
शुक्ला हैमवती वैद्यमातृसिंह्यौ तु वाशिका ८५४
वृषोऽटरूषः सिंहास्यो वासको वाजिदन्तकः ८५५
आस्फोटा गिरिकर्णी स्याद्विष्णुक्रान्ताऽपराजिता ८५६
इक्षुगन्धा तु काण्डेक्षुकोकिलाक्षेक्षुरक्षुराः ८५७

---

नाम ॥—काकचिञ्ची, गुञ्जा, कृष्णला, ३ रातीगेडीका नाम ॥—पलंकषा, इक्षुगन्धा, श्वदंष्ट्रा, स्वादुकण्टकः, गोकण्टकः, गोक्षुरकः, वनशृङ्गाटः, ७ गोखुरका नाम॥—विश्वा, विषा, प्रतिविषा, अतिविषा, उपविषा, अरुणा, शृङ्गी, महौषधम्, ८ अतीसका नाम ॥—क्षीरावी, दुग्धिका, २ रूधिलाका नाम ॥—शतमूली, बहुसुता, अभीरुः, इन्दीवरी, वरी, ऋष्यप्रोक्ता, अभीरुपत्री, नारायणी, शतावरी, अहेरुः १० सतावरी (कुहिलाका नाम ॥—पीतद्रुः, कालीयकः, हरिद्रुः, दार्वी, पचंपचा, दारुहरिद्रा, पर्जनी, ७ चुत्राका नाम ॥—वचा, उग्रगन्धा, षड्ग्रन्था, गोलोमी, शतपर्विका, ५ बोझाका नाम ॥—शुक्ला वचा सा हैमवती १ सेतो जरा डाँठ्हुने बोझाको नाम ॥—वैद्यमाता, सिंही, वाशिका, वृषः, अटरूषः, सिंहास्यः, वासकः, वाजिदन्तकः, ८ असुराका नाम ॥—आस्फोटा,

शालेयः स्याच्छीतशिवश्छत्रा मधुरिका मिसिः ८५८
मिश्रेयाप्यथ सीहुण्डो वज्रः स्नुक् स्त्री स्नुही गुडा ८५९
समन्तदुग्धाऽथो वेल्लममोघा चित्रतण्डुला ८६०
तण्डुलश्च कृमिघ्नश्च विडङ्गं पुंनपुंसकम् ८६१
बला वाट्यालका घण्टारवा तु शणपुष्पिका ८६२
मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च ८६३
सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् ८६४
त्रिभण्डी रोचनी श्यामापालिन्द्यौ तु सुषेणिका ८६५
काला मसूरविदलाऽर्धचन्द्रा कालमेषिका ८६६
मधुकं क्लीतकं यष्टिमधुकं मधुयष्टिका ८६७
विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री तु या सिता ८६८
अन्या क्षीरविदारी स्यान्महाश्वेतर्क्षगन्धिका ८६९

---

गिरिकर्णी, विष्णुक्रान्ता, अपराजिता, ४ अपराजिताका नाम ।।—इक्षुगन्धा, काण्डेक्षुः, कोकिलाक्षः, इक्षुरः, क्षुरः, ५ तालमखानाका नाम ।।—शालेयः शीतशिवः, छत्रा, मधुरिका, मिसिः, मिश्रेया, ६ वनसूपका नाम ।।—सीहुण्डः, वज्रः, स्नुक्, स्नुही, गुडा, समन्तदुग्धा, ६ सिउँडीका नाम । स्नुक् स्त्री.माछ ।।—वेल्लम्, अमोघा, चित्रतण्डुला, तण्डुलः, कृमिघ्नः, विडङ्गम्, ६ वायुविडङ्गका नाम ।।—बला, वाट्यालका, २ बलुका नाम ।।—घण्टारवा, शणपुष्पिका, २ शणपुष्पिका नाम ।।—मृद्वीका, गोस्तनी, द्राक्षा, स्वाद्वी, मधुरसा ५ दाखका नाम ।।—सर्वानुभूतिः, सरला, त्रिपुटा, त्रिवृता, त्रिवृत्, त्रिभण्डी, रोचनी, ७ निशोथका नाम ।।—श्यामा, पालिन्दी, सुषेणिका, काला, मसूरविदला, अर्धचन्द्रा, कालमेषिका, ७ काला निशोथका नाम ।।—मधुकम्, क्लीतकम्, यष्टिमधुकम्, मधुयष्टिका, ४ जेठीमधुका नाम ।।—विदारी, क्षीरशुक्ला, इक्षुगन्धा, क्रोष्ट्री, ४ बिराले ( विराली ) लहराका नाम ।।—क्षीरविदारी, महाश्वेता

क्रये प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रके १८६९
विक्रेयं पणितव्यं च पण्यं क्रय्यादयस्त्रिषु १८७०
क्लीबे सत्यापनं सत्यंकारः सत्याकृतिः स्त्रियाम् १८७१
विपणो विक्रयः संख्याः संख्येये ह्यादश त्रिषु १८७२
विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः १८७३
संख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः १८७४
पङ्क्तेः शतसहस्रादि क्रमाद्दशगुणोत्तरम् १८७५

---

निमयः, ४ साट्नाका नाम ॥—उपनिधिः, न्यासः, २ नासोका नाम। उपनिधिः, पुं. माछ। प्रतिदानं १ नासो बुझाउनु फिर्तादिनुको नाम। क्रय्यं १ बेच्न राखेकावस्तुको नाम। क्रेयम् १ किन्न लायक भयेका वस्तुको नाम॥—विक्रेयम्, पणितव्यम्, पण्यम्, ३ बेच्न लायक (बेच्ने) चिज विजका नाम। त्रिलिङ्गीछन्॥—सत्यापनम्, सत्यंकारः, सत्याकृतिः, ३ बैनाका नाम॥—विपणः, विक्रयः, २ बिक्रिका नाम। संख्या वाचक (एक द्वि प्रभृति) शब्द संख्येय (गनिने) वस्तुलाई कहँदा, दशशब्द-को प्रयोग हुन् ज्याल अर्थात् (उन्नाइस) सम्म विशेष्यनिघ्न त्रिलिङ्गी हुन्छन्॥ अब विंशति देखी आरम्भ गरेका (एकोनविंशति-विंशति लगायत) नवनवति (उनान्सये सम्मकाशब्द निर्दिष्ट संख्यार संख्येय (गनिने) लाईकहँदा एक वचनान्तै रहन्छन्, तर संख्या वाचक छँदा स्त्रीलिङ्ग, संख्येयवाचक छँदा विशेष्यनिघ्न लिङ्गीहुन्छन्। इनैशब्द संख्याको द्वित्व बहुत्व जस्तै २ वीस ३ वीस इत्यादिलाई बुझाँउँदाता द्विवचनान्त बहुवचनान्त पनि हुन्छन्॥ पङ्क्तिर्दशसंख्या, शतम् सहस्रम्, इत्यादि पङ्क्ति (दश) देखी शुरू भयेका शत-सहस्र-प्रभृति परार्द्ध पर्यन्तका संख्या उत्तरोत्तर १०।१० गुणा बढता हुन्छन् तिन्को नाम र स्वरूप हेर आर्कापढिछ। एकैकवृद्धिः सनामाङ्कमाहं ज्ञेया॥

यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम् १८७६
मानं तुलाङ्गुलिप्रस्थैर्गुञ्जाः पञ्चाद्यमाषकः १८७७
ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम् १८७८
सुवर्णबिस्तौ हेम्नोऽक्षे कुरुबिस्तस्तु तत्पले १८७९
तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः १८८०
आचितो दश भाराः स्युः शाकटो भार आचितः १८८१
कार्षापणः कार्षिकः स्यात् कार्षिके ताम्रिके पणः १८८१
अस्त्रियामाढकद्रोणौ खारी वाहो निकुञ्चकः १८८३

---

| | | | |
|---|---|---|---|
| एकम् | १ | वृन्दम् | १००००००००० |
| दशः | १० | खर्वः | १०००००००००० |
| शतम् | १०० | निखर्वः | १००००००००००० |
| सहस्रम् | १००० | शङ्खः | १०००००००००००० |
| अयुतम् | १०००० | पद्मः | १००००००००००००० |
| लक्षम् | १००००० | सागरः | १०००००००००००००० |
| निवुतम् | १०००००० | अन्त्यम् | १००००००००००००००० |
| कोटि | १००००००० | मध्यम् | १०००००००००००००००० |
| अर्बुदम् | १०००००००० | परार्द्धम् | १००००००००००००००००० |

यौतवम्, द्रुवयम्, पाय्यम्, ३ प्रमाण नाप्नु-जोख्नुभनुं ई ३ का ३ नाम ॥ पञ्चगुञ्जाः आद्यमाषकः २ पाँचगुञ्जा ५ लाल एक मासाको नाम। अक्षः, कर्षः, २ । १६ मासाका नाम। पलं १ चार कर्षको नाम ॥—सुवर्णः, बिस्तः, २ सोह्र मासा सुवर्णका नाम। कुरुबिस्तः १ एक पल ५ तोला ४ मासा सुवर्णको नाम। तुला १ शय १०० पल अर्थात् ५३३ तोला ४ मासाको नाम। भारः १ बीसतुला अर्थात् १०६६६ तोला ८ मासाको नाम। आचितः (दशभार) अर्थात् १०६६६६ तोला ८

कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् १८८४
पादस्तुरीयो भागः स्यादंशभागौ तु वण्टके १८८५
द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु १८८६
हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि १८८७
स्यात्कोशश्च हिरण्यं च हेमरूप्ये कृताकृते १८८८
ताभ्यां यदन्यत्तत्कुप्यं रूप्यं तद्द्वयमाहतम् १८८९
गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः १८९०
शोणरत्नं लोहितकः पद्मरागोऽथ मौक्तिकम् १८९१
मुक्ताथ विद्रुमः पुंसि प्रवालं पुंनपुंसकम् १८९२
रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च १८९३

---

८ मासाको नाम । यः शाकटः सोऽप्याचित ॥ मानिसले बोक्न नसकिने गाडीमा लादनु पर्ने भारीको पनि नाम हो । कार्षापणः, कार्षिकः २ चादिका रूपियाका नाम । ताम्रिके तस्मिन्कार्षिके पण १ ताबाका पैसाको नाम ॥ आढकः, द्रोणः, खारी, वाहः, निकुञ्चकः, कुडवः, प्रस्थः, ७आढकः,४ पाथीको द्रोणः, १६ पाथीको एकखारी ( सोह्रद्रोणः ), १२ मुरी १६ पाथीको-वाहः, बीसखारी २४६ मुरीको निकुञ्चकः,आधामानाको कुडवः, कुरुवाको प्रस्थः, १ पाथीको ७ का ७ नाम क्रमैले जान्नु ॥ तुर्यो भागः पादः १ चौथाईको नाम ॥—अंशः, भागः, वण्टकः, ३ भागः, ( अंशका ) नाम । द्रव्यम्, वित्तम्, स्वापतेयम् रिक्थम्, ऋक्थम्, धनम्, वसु, हिरण्यम्, द्रविणम्, द्युम्नम्, अर्थः, राः, विभवः, १३ धनका नाम ॥—कोशः, हिरण्यम्, २ केही ( भूषण प्रभृति ) बनायेका र नबनायेका ( कोरा ) सुन् चाँदीका नाम ॥ कुप्यं १ सुन चादि बाहेक जिनिस मालको नाम ॥ रूप्यम् १ छाप लायेका सुवर्ण चादिका ( असर्फि रुपिया ) को नाम ॥—गारुत्मतम्, मरकतम्, अश्मगर्भः, हरिन्मणिः, ४ पन्नाका नाम ॥—शोणरत्नम्, लोहितकः,

स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् १८९४
तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम् १८९५
चामीकरं जातरूपं महारजतकाञ्चने १८९६
रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् १८९७
अलंकारसुवर्णं यच्छृङ्गीकनकमित्यदः १८९८
दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि १८९९
रीतिः स्त्रियांमारकूटो न स्त्रियामथ ताम्रकम् ९००
शुल्वं म्लेच्छमुखं द्व्यष्टवरिष्टोदुम्बराणि च १९०१
लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी १९०२
अश्मसारोऽथ मण्डूरं सिंहाणमपि तन्मले १९०३
सर्वं च तैजसं लोहं विकारस्त्वयसः कुशी १९०४
क्षारः काचोऽथ चपलो रसः सूतश्च पारदे १९१५

---

पद्मरागः, ३ माणिकका नाम ॥—मौक्तिकम्, मुक्ता, २ मोतीका नाम ॥—विद्रुमः, प्रवालः, २ मुगाका नाम ॥—रत्नम्, मणिः, २ सामान्य रत्नका नाम ॥ मणिः स्त्री-पुंमाछ ॥—स्वर्णम्, सुवर्णम्, कनकम्, हिरण्यम्, हेम, हाटकम्, तपनीयम्, शातकुम्भम्, गाङ्गेयम्, भर्म, कर्बुरम्, चामीकरम्, जातरूपम्, महारजतम्, काञ्चनम्, रुक्मम्, कार्तस्वरम्, जाम्बूनदम्, अष्टापदम्, १९ सुवर्णः, (सुन)का नाम ॥ अष्टापदं पुं. नपुं.माछ ॥ शृङ्गीकनकम् १ गहना बनायेका सुवर्णको नाम ॥—दुर्वर्णम्, रजतम्, रूप्यम्, खर्जूरम्, श्वेतम्, ५ चाँदीका नाम ॥—रीतिः, आरकूटः, २ पित्तलका नाम ॥—ताम्रकम्, शुल्बम्, म्लेच्छमुखम्, द्व्यष्टम्, वरिष्टम्, उदुम्बरं, ६ तामा (ताम्र)का नाम ॥—लोहः, शस्त्रकम्, तीक्ष्णम्, पिण्डम्, कालायसम्, अयः, अश्मसारः, ७ फलामका नाम ॥—मण्डूरम, सिंहाणम्, २ लोहामा निस्कने कीटका नाम ॥ लोहम् १ सामान्य धातु(कासन्तामन्)का नाम ॥

गवलं माहिषं शृङ्गमभ्रकं गिरिजामले १९०६
स्रोतोञ्जनं तु सौवीरं कापोताञ्जनयामुने १९०७
तुत्थाञ्जनं शिखिग्रीवं वितुन्नकमयूरके १९०८
कर्परी दार्विकाक्वाथोद्भवं तुत्थं रसाञ्जनम् १९०९
रसगर्भं तार्क्ष्यशैलं गन्धाश्मनि तु गन्धिकः १९१०
सौगन्धिकश्च चक्षुष्याकुलाल्यौ तु कुलत्थिका १९११
रीतिपुष्पं पुष्पकेतु पुष्पकं कुसुमाञ्जनम् १९१२
पिञ्जरं पीतनं तालमालं च हरितालके १९१३
गैरेयमर्थ्यं गिरिजमश्मजं च शिलाजतु १९१४
बोलगन्धरसप्राणपिण्डगोपरसाः समाः १११५
डिण्डीरोऽब्धिकफः फेनः सिन्दूरं नागसंभवम् १९१६

---

अयसो विकारः कुशी १ फलामका फालीको नाम ॥—क्षारः, काचः, २ काँचका नाम ॥—चपलः, रसः, सूतः, पारदः, ४ पाराका नाम ॥—यन्माहिषं शृङ्गं तत् गवलं १ भैंसीका सिंगको नाम ॥—अभ्रकम्, गिरिजामलम्, २ अभ्रकका नाम ॥—स्रोतोञ्जनम्, सौवीरम्, कापोताञ्जनम्, यामुनम्, ४ सुर्माका नाम ॥—तुत्थाञ्जनम्, शिखिग्रीवम्, वितुन्नकम्, मयूरकम्, कर्परी, ५ तुत्थाञ्जन नेत्रको औषधी विशेषका नाम ॥—तुत्थम्, रसाञ्जनम्, रसगर्भम्, तार्क्ष्यशैलम्, ४ चुत्राका रसवाट बनेको औषधी विशेषका नाम ॥—गन्धाश्म, गन्धिकः, सौगन्धिकः, ३ गन्धकका नाम ॥—चक्षुष्या, कुलाली, कुलत्थिका, ३ गहतका नाम ॥—रीतिपुष्पम्, पुष्पकेतु, पुष्पकम्, कुसुमाञ्जनम्, पित्तलका कीटका नाम ॥—पिञ्जरम्, पीतनम्, तालम्, आलम्, हरितालकम्, ५ हरितालका नाम ॥—गैरेयम्, अर्थ्यम्, गिरिजम्, अश्मजम्, शिलाजतु, ५ शिलाजितका नाम ॥—बोलः, गन्धरसः, प्राणः, पिण्डः, गोपरसः, ५ गन्धरस ( औषधी ) विशेषका नाम ॥—

नागसीसकयोगेष्टवप्राणि त्रपु पिच्चटम् १९१७
रङ्गवङ्गे अथ पिचुस्तूलोऽथ कमलोत्तरम् १९१८
स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि १९१९
मेषकम्बल ऊर्णायुः शशोर्णं शशलोमनि १९२०
मधु क्षौद्रं माक्षिकादि मधूच्छिष्टं तु सिक्थकम् १९२१
मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका १९२२
नैपाली कुनटी गोला यवक्षारो यवाग्रजः १९२३
पाक्योऽथ सर्जिकाक्षारः कापोतः सुखवर्चकः १९२४
सौवर्चलं स्याद्रुचकं त्वक्क्षीरी वंशरोचना १९२५
शिग्रुजं श्वेतमरिचं मोरटं मूलमैक्षवम् १९२६

---

डिण्डीरः, अब्धिकफः, फेनः, ३ समुद्रका फेनका नाम ॥—सिन्दूरम्, नागसंभवम्, २ सिन्दूर ( फुल्ला )का नाम ॥—नागम्, सीसकम्, योगेष्टम्, वप्रम्, ४ सीसाका नाम ॥—त्रपु, पिच्चटम्, रङ्गम्, वङ्गम्, ४ राङ्का नाम ॥—पिचुः, तूलः, २ रूवा ( कपास )का नाम ॥—कमलोत्तरम्, कुसुम्भम्, वह्निशिखम्, महारजनम्, ४ कुसुम ( वर्राकाफूल )को नाम ॥—मेषकम्बलः, ऊर्णायुः, २ कम्बल-राडी-पाखीका नाम ॥—शशोर्णम्, शशलोम, २ खरायोका रऊँका नाम ॥—मधु, क्षौद्रम्, माक्षिकम्, ३ मौरीले बनायेका महका नाम भ्रमर र पुत्काले लायेका महलाई कहँदामा भ्रामर-पौत्तिकः शब्द प्रयोग हुन्छन् ॥—मधूच्छिष्टम्, सिक्थकम्, २ मईनका नाम ॥—मनःशिला, मनोगुप्ता, मनोह्वा, नागजिह्विका, ४ मैनसिल ( मनसिला )का नाम ॥—नैपाली, कुनटो, गोला, ३ नेपालमा हुने मनशिलाका नाम ॥—यवक्षारः, यवाग्रजः, पाक्यः, ३ जवाखारका नाम ॥—सर्जिकाक्षारः, कापोतः, सुखवर्चकः, ३ सज्जीखारका नाम ॥—सौवर्चलम्, रुचकम्, २ खार भेद या ( सोच र ) खारका नाम ॥—त्वक्क्षोरी, वंश-

ग्रन्थिकं पिप्पलीमूलं चटकाशिर इत्यपि १९२७
गोलोमी भूतकेशो ना पत्राङ्गं रक्तचन्दनम् १९२८
त्रिकटु त्र्यूषणं व्योषं त्रिफला तु फलत्रिकम् १९२९

इति वैश्यवर्गः ॥ ११. अथ शूद्रवर्गः

शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः १९३०
आचण्डालात्तु संकीर्णा अम्बष्ठकरणादयः १९३१
शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः १९३२
शूद्राक्षत्रिययोरुग्रो मागधः क्षत्रियाविशोः १९३३
माहिष्योऽर्याक्षत्रिययोः क्षत्तार्याशूद्रयोः सुतः १९३४
ब्राह्मण्यां क्षत्रियात्सूतस्तस्यां वैदेहको विशः १९३५

---

रोचना, २ वंशलोचनका नाम ।।—शिग्रुजम्, श्वेतमरिचम्, २ सेता मरीच (सहेजनका बीज)का नाम ।। मोरटं १ उखुका जराको नाम ।।—ग्रन्थिकम्, पिप्पलीमूलम्, चटकाशिरः, ३ पिप्लामूलका नाम ।।—गोलोमी, भूलकेशः, २ जटामसीका नाम ।।—पत्राङ्गम्, रक्तचन्दनम्, २ वकम ( रक्तसार ) चन्द्रन विशेषका नाम ।।—त्रिकटु, त्र्यूषणम्, व्योषम्, ३ त्रिकटुः, सुठो-मरीच-पीपलाका नाम ।।—त्रिफला, फलत्रिकम्, २ त्रिफला ( हर्रो-वर्रो-अमला ३ का समूहका नाम ।।

१९३०-२०२३ शूद्रः, अवरवर्णः, वृषलः, जघन्यजः, ४ शूद्रका नाम ।। संकीर्णाः १ संकरको नाम ।। करणः १ शूद्रामा पैदाभयेका वैश्यपुत्रको नाम ।। अम्बष्ठः १ वैश्य कन्यामा ब्राह्मणवाट पैदा भयेका संकरको नाम ।। उग्रः १ शूद्रामा क्षत्रीयवाट भयेका सन्तानको नाम ।। मागधः १ क्षत्रियामा वैश्यवाट जन्मेका सन्तानको नाम ।। माहिष्यः १ वैश्य पुत्रीमा क्षत्रियवाट जन्मेका सन्तानको नाम ।। क्षत्ता १ वैश्यपुत्रीमा शूद्रवाट जन्मेका सन्तानको नाम ।। सूतः १ ब्राह्मणपुत्रीमा क्षत्रियवाट जन्मेका सन्तानको

रथकारस्तु माहिष्यात्करण्यां यस्य संभवः १९३६
स्याच्चण्डालस्तु जनितो ब्राह्मण्यां वृषलेन यः १९३७
कारुः शिल्पी संहतैस्तैर्द्वयोः श्रेणिः सजातिभिः १९३८
कुलकः स्यात्कुलश्रेष्ठी मालाकारस्तु मालिकः १९३९
कुम्भकारः कुलालः स्यात् पलगण्डस्तु लेपकः १९४०
तन्तुवायः कुविन्दः स्यात्तुन्नवायस्तु सौचिकः १९४१
रङ्गाजीवश्चित्रकरः शस्त्रमार्जोऽसिधावकः १९४२
पादूकृच्चर्मकारः स्याद्व्योकारो लोहकारकः १९४३
नाडिंधमः स्वर्णकारः कलादो रुक्मकारकः १९४४
स्याच्छाङ्खिकः काम्बविकः शौल्बिकस्ताम्रकुट्टकः १९४५

---

नाम ।। वैदेहकः १ ब्राह्मणपुत्रीमा वैश्यबाट पैदाभयेका सन्तानको नाम ।। रथकारः १ करणी ( शूद्रामा जन्मेकी वैश्य पुत्रीमा ) वैश्यामा क्षत्रियबाट जन्मेको छोरो माहिष्यः बाट जन्मेका सन्तानको नाम ।। चण्डालः १ ब्राह्मणीमा जन्मेको शूद्रसन्तानको नाम ।।—कारुः, शिल्पी, २ काली गडका नाम ।। श्रेणिः १ कालीगडै कालीगडका समूहको नाम ।। स्त्रीपुं.माछ ।।—कुलकः, कुलश्रेष्ठी, २ कालीगडका नाइकेका नाम ।। मालाकारः, मालिकः, २ मालिका नाम ।।—कुम्भकारः, कुलालः, २ कुह्माले-का नाम ।।—पलगण्डः, लेपकः, २ लीपपोत गर्नेका नाम ।।—तन्तुवायः, कुविन्दः, २ जुलाहा ( लुगा बुन्ने )का नाम ।।—तुन्नवायः, सौचिकः, २ सूचीकारका नाम ।।—रङ्गाजीवः, चित्रकरः, २ चित्रकारीका नाम ।।—शस्त्रमार्जः, असिधावकः, २ हात हतियारमा सानलाउने साफगर्नेका नाम ।।—पादूकृत्, चर्मकारः, २ चमार ( सार्किका ) नाम ।।—व्योकारः, लोहकारकः, २ कामीका नाम ।।—नाडिंधमः, स्वर्णकारः, कलादः, रुक्म-कारकः, ४ सुनारका नाम ।।—शाङ्खिकः, काम्बविकः, २ शंखको चुरो

तक्षा तु वर्धकिस्त्वष्टा रथकारस्त [illegible]ट् १९४६
ग्रामाधीनो ग्रामतक्षः कौटतक्षो [illegible]धानकः १९४७
क्षुरी मुण्डी दिवाकीर्तिनापितान्तावसायिनः १९४८
निर्णेजकः स्याद्रजकः शौण्डिको मण्डहारकः १९४९
जाबालः स्यादजाजीवो देवाजीवस्तु देवलः १९५०
स्यान्माया शाम्बरी मायाकारस्तु प्रतिहारकः १९५१
शैलालिनस्तु शैलूष जायाजीवाः कृशाश्विनः १९५२
भरता इत्यपि नटाश्चारणास्तु कुशीलवाः १९५३
मार्दङ्गिका मौरजिकाः पाणिवादास्तु पाणिधाः १९५४
वेणुध्माः स्युर्वैणविका वीणावादास्तु वैणिकाः १९५५

---

आदि बनाउनेका नाम ॥—शौल्विकः, ताम्रकुट्टकः, २ कसाल ( ताबाका भाडा वर्तन ) बनाउनेका नाम ॥—तक्षा, वर्धकिः, त्वष्टा, रथकारः, काष्ठतट्, ५ सिकर्मिका नाम ॥ ग्रामतक्षः १ गाउलेले बालीभरेर काम लाईने सिकर्मीको नाम ॥ अनधीनकः, कौटतक्षः, १ आफु खुसी सिकर्मीको नाम ॥—क्षुरी, मुण्डी, दिवाकीर्तिः, नापितः, अन्तावसायी, ५ नाउ ( हजाम )का नाम ॥—निर्णेजकः, रजकः, २ धोबीका नाम ॥—शौण्डिकः, मण्डहारकः, २ सूँढी ( जाँडरक्सीको ) काम गर्नेका नाम ॥—जाबालः, अजाजीवः, २ बाका बाख्रा पालेर जीविका गर्नेका नाम ॥—देवाजीवः, देवलः २ पूजाहारीका नाम ॥—माया, शाम्बरी, २ चटकका नाम ॥—मायाकारः, प्रतिहारकः, २ चटकगर्नेका नाम ॥—शैलाली, शैलूषः, जायाजीवः, कृशाश्वी, भरतः, नटः, ६ नटुवाका नाम ॥—चारणः, कुशीलवः, २ कत्थकका नाम ॥—मार्दङ्गिकाः, मौरजिकाः, २ मृदङ्ग बजाउन जान्नेका नाम ॥—पाणिवादाः, पाणिघाः, २ हातले ताली बजाउन जान्नेका नाम ॥—वेणुध्माः, वैणविकाः, २ बाँसुरी बजाउन जान्नेका नाम ॥—वीणावादाः, वैणिकाः, २

जीवान्तकः शाकुनिको द्वौ वागुरिकजालिकौ १९५६
वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम् १९५७
भृतको भृतिभुक्कर्मकरो वैतनिकोऽपि सः १९५८
वार्तावहो वैवधिको भारवाहस्तु भारिकः १९५९
विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः १९६०
निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च सः १९६१
भृत्ये दासेरदासेयदासगोप्यकचेटकाः १९६२
नियोज्यकिङ्करप्रेष्यभुजिष्यपरिचारकाः १९६३
पराचितपरिस्कन्दपरजातपरैधिताः १९६४
मन्दस्तुन्दपरिमृज आलस्यः शीतकोऽलसोऽनुष्णः १९६५
दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च १९६६

---

वीणा बजाउन जान्नेका नाम ॥—जीवान्तकः, शाकुनिकः, २ चरा चुरुङ्गीको शिकार गर्नेका नाम ॥—वागुरिकः, जालिकः, २ जालहान्ने जालथाप्ने मृगमारनेका नाम ॥—वैतंसिकः, कौटिकः, मांसिकः, ३ बकर-कसाई ( मासु बेच्नेका ) नाम ॥—भृतकः, भृतिभुक्, कर्मकरः, वैतनिकः, ४ ज्यालावाला र तनखावालाका नाम ॥—वार्तावहः, वैवधिकः, २ हाल खबर पुर्‍याउने ( हुलाकी ) का नाम ॥—भारवाहः, भारिकः, २ भारी बोक्नेका नाम ॥—विवर्णः, पामरः, नीचः, प्राकृतः, पृथग्जनः, निहीनः, अपसदः, जाल्मः, क्षुल्लकः, इतरः, १० नीच ( हल्का ) मामुली मानिसका नाम ॥—भृत्यः, दासेरः, दासेयः, दासः, गोप्यकः, चेटकः, नियोज्यः, किङ्करः, प्रैष्यः, भुजिष्यः, परिचारकः, ११ दास ( नोकर चाकर ) का नाम ॥—पराचितः, परिस्कन्दः, परजातः, परैधितः, ४ विनातनखाका भतुवाका नाम ॥—मन्दः, तुन्दपरिमृजः, आलस्यः, शीतकः, अलसः, अनुष्णः, ६ अल्छीका नाम ॥—दक्षः, चतुरः,

चण्डालप्लवमातङ्गदिवाकीर्तिजनंगमाः १९६७
निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः १९६८
भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः १९६९
व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः १९७०
कौलेयकः सारमेयः कुक्कुरो मृगदंशकः १९७१
शुनको भषकः श्वा स्यादलर्कस्तु स योगितः १९७२
श्वा विश्वकद्रुर्मृगयाकुशलः सरमा शुनी १९७३
विट्चरः सूकरो ग्राम्यो वर्करस्तरुणः पशुः १९७४
आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम् १९७५
दक्षिणारुर्लुब्धयोगाद्दक्षिणेर्मा कुरङ्गकः १९७६
चौरैकागारिकस्तेनदस्युतस्करमोषकाः १९७७
प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः १९७८

---

पेशलः, पटुः, सूत्थानः, उष्णः, ६ जाँगरीलाका नाम ॥ चण्डालः, प्लवः, मातङ्गः, दिवाकीर्तिः, जनंगमः, निषादः, श्वपचः, अन्तेवासी, चाण्डालः, पुक्कसः, १० चाण्डाल ( पोडे ) का नाम ॥—किरातः, शबरः, पुलिन्दः, ३ म्लेच्छजाति ( किरात शबर-पुलिन्द )का नाम ॥—व्याधः, मृगवधाजीवः, मृगयुः, लुब्धकः, ४ व्याधाका नाम ॥—कौलेयकः, सारमेयः, कुक्कुरः, मृगदंशकः, शुनकः, भषकः, श्वा, ७ कुक्कुरका नाम । अलर्कः १ बहुलायेका कुक्कुरको नाम । विश्वकद्रुः १ शिकारी कुकुरको नाम । शुनी सरमा २ कुक्कुर्नीका नाम । ग्राम्यः, सूकरः, विट्चरः, ३ सुँगुरका नाम । वर्करः, १ तरुण पशुका नाम ॥—आच्छोदनम्, मृगव्यम्, आखेटः, मृगया, ४ शिकार खेलुवाका नाम ॥ दक्षिणेर्मा १ दाहिनेकोखापट्टिघाइते भयेका मृगको नाम ॥ चौरः, ऐकागारिकः, स्तेनः, दस्युः, तस्करः, मोषकः, प्रतिरोधिः,

चौरिका स्तैन्यचौर्ये च स्तेयं लोप्त्रं तु तद्धने १९७९
वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम् १९८०
उन्माथः कूटयन्त्रं स्याद्वागुरा मृगबन्धनी १९८१
शुल्बं वराटकं स्त्री तु रज्जुस्त्रिषु वटी गुणः १९८२
उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः १९८३
पुंसि वेमा वायदण्डः सूत्राणि नरि तन्तवः १९८४
वाणिर्व्यूतिः स्त्रियौ तुल्ये पुस्तं लेप्यादिकर्मणि १९८५
पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता १९८६
जतुत्रपुविकारे तु जातुषं त्रापुषं त्रिषु १९८७
पिटकः पेटकः पेटा मञ्जूषाथ विहङ्गिका १९८८

---

परास्कन्दिः, पाटच्चरः, मलिम्लुचः, १० चोरका नाम। चौरिकाः, स्तैन्यम्, स्तेयम्, चौर्यम्, ४ चोरी ( चोर्नो )का नाम। चौर्यं धनं लोप्त्रं १ दसीको नाम। मृगपक्षिणां बन्धने यदुपकरणं स वीतंसः १ शिकार खेल्ने सर्जामका नाम॥—उन्माथः, कूटयन्त्रम्, २ खोर ( शिकार बल्झाउनेयन्त्र ) का नाम॥—वागुरा, मृगबन्धनी, २ पासो ( सिकार वल्झाउने डोरी ) को नाम॥—शुल्बम्, वराटकम्, रज्जुः, वटी, गुणः, ५ साधारण डोरीका नाम। रज्जुः स्त्रीलि. छ वटी त्रिलिङ्गी छ। उद्घाटनम्, घटीयन्त्रम्, २ रहाट ईनाँरबाट पानी झिक्ता गाग्रो भुण्ड्याउने काठ बाँसका नाम॥—वेमा, वायदण्डः, २ कपडा बुन्दा गजपट्टि ठोक्ने चेप्टो काठका नाम॥—सूत्राणि, तन्तवः, २ धागाका नाम। तन्तु पुंलिङ्गछ॥—वाणिः, व्यूतिः, २ वस्त्र बुन्नाका नाम। पुस्तः १ माटो, लकडी, वस्त्र छाला-धातु रत्न इत्यादि वस्तुलेकालीगडी गर्नुका नाम। पाञ्चालिका १ पुत्तली काठवस्त्र इत्यादिले बनायेका मूर्तिको नाम। दन्तो गजदन्तः, आदि पदले चर्म माटो पत्थर हेरू अनेकलिईन्छन्। जतुविकारो जातुषम् १ लाहाले बनेका वस्तुको नाम।

भारयष्टिस्तदालम्बि शिक्यं काचोऽथ पादुका १९८९
पादूरुपानत्स्त्री सैवानुपदीना पदायता १९९०
नध्री वध्री वरत्रा स्यादश्वादेस्ताडनी कशा १९९१
चाण्डालिका तु कण्डोलवीणा चण्डालवल्लकी १९९२
नाराची स्यादेषणिका शाणस्तु निकषः कषः १९९३
व्रश्चनः पत्रपरशुरीषिका तूलिका समे १९९४
तैजसावर्तनी मूषा भस्त्रा चर्मप्रसेविका १९९५
आस्फोटनी वेधनिका कृपाणी कर्तरी समे १९९६
वृक्षादनी वृक्षभेदी टङ्कः पाषाणदारणः १९९७

---

त्रपुविकारस्त्रापुषम् १ सीसाले बनेका बस्तुको नाम ॥—पिटकः पेटकः, पेटा, मञ्जूषा, ४ पेटारो संदूस-वाकस्-कन्तूर-वेगका नाम ॥—विहङ्गिका, भारयष्टिः, २ बँहगी ( नोल )का नाम । शिक्यम्, काचः, २ नोलमा भुण्ड्याउने शिकार खरपनका नाम ॥—पादुका, पादूः, उपानत्, ३ जुताका खराब बूट चट्टीका नाम । अनुपदीना १ मोजा-लामुमोजाका नाम ॥—नध्री, वध्री, वरत्रा, ३ छालाका डोरीका नाम ॥—कशा १ घोडा आदिलाई कुट्नेकोर्राको नाम ॥ चाण्डालिका, कण्डोलवीणा, चण्डालवल्लकी, ३ चाण्डालले बजाउने सारङ्गीका नाम ॥—नाराची, एषणिका, २ काँटा ( सुनारले सुन् जोख्ने सानु तराजूका नाम ॥—शाणः, निकषः, कषः, ३ कसी (सुन्-चादि जाच्ने) ढुङ्गाका नाम ॥—व्रश्चनः, पत्रपरशुः, २ सुन् चाँदी काटने छिनुका नाम ॥—ईषिका, तूलिका, २ सुन् चाँदीमा वान्गी चढाउदा मसला लाउने सानू कूचीका नाम । मूषा १ भोचा ( सुन् चादि पगाल्ने भाँडाका नाम ॥ भस्त्रा, चर्मप्रसेविका, २ खलाँतीका नाम ॥—आस्फोटनी, वेधनिका, २ मोती मणिका नाम ॥—कृपाणी, कर्तरी, २ कतर्नू ( कैंची )का नाम ॥—वृक्षादनी, वृक्षभेदी, २ बोसिलाका नाम ॥—

क्रकचोऽस्त्री करपत्रमारा चर्मप्रभेदिका १९९८
सूर्मी स्थूणायःप्रतिमा शिल्पं कर्म कलादिकम् १९९९
प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया २०००
प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात् २००१
वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक् २००२
साधारणः समानश्च स्युरुत्तरपदे त्वमी २००३
निभसंकाशनीकाशप्रतीकाशोपमादयः २००४
कर्मण्या तु विधाभृत्याभृतयो भर्म वेतनम् २००५
भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि २००६
सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा २००७

---

टङ्कः, पाषाणदारणः, २ पत्थर काट्ने फौरने टाँकी-छिनु घन आदिका नाम ॥—क्रकचः, करपत्रम्, २ करौंती आरा आरी आदिकाठचिर्ने हथियारका नाम ॥—आरा, चर्मप्रभेदिका, २ ( बाँक ) जुतासिउने सार्किले छालाकाटले शस्त्र विशेषका नाम ॥—सूर्मी, स्थूणा, अयः प्रतिमा, ३ फलामका मूर्ति प्रतिमा ( इष्टाचू )का नाम । तच्छिल्पम् १ सीप-कुशलपना कालीगडीको नाम ॥—प्रतिमानम्, प्रतिबिम्बम्, प्रतिमा, प्रतियातना, प्रतिच्छाया, प्रतिकृतिः, अर्चा, प्रतिनिधिः, ८ प्रतिबिम्ब ( फोटो ) तस्वीर, छायाका नाम ॥ प्रतिनिधिः, पुंलिङ्गछ ॥—उपमा, उपमानम्, २ सादृश्य- ( तुल्याता-समान बराबर )का नाम ॥ समः, तुल्यः, सदृक्षः, सदृशः, सदृक्, साधारणः, समानः, ७ तुल्य समान-बराबरका नाम ॥—निभः, संकाशः, नीकाशः, प्रतीकाशः, उपमा, ५ समासमा उत्तर पदभैकन तुल्यता बुझाउने समास नगरेमा प्रयोगै नहुने सादृश्य वाचक शब्द जस्तै राजनिभः, राज-शंकाशः इत्यादि जान्नु ॥—कर्मण्या, विधा, भृत्या, भृतिः, भर्म, वेतनम्, भरण्यम्, भरणम्, मूल्यम्, निर्वेशः, पणः, ११ ज्याला ( तनखा ) वेतनका नाम ॥-सुरा, हलिप्रिया, हाला, परिस्रुत्, वरुणात्मजा, गन्धोत्तमा, प्रसन्ना, इरा,

गन्धोत्तमाप्रसन्नेराकादम्बर्यः परिस्रुता २००८
मदिरा कश्यमद्ये चाप्यवदंशस्तु भक्षणम् २००९
शुण्डापानं मदस्थानं मधुवारा मधुक्रमाः २०१०
मध्वासवो माधवको मधु माध्वीकमद्वयोः २०११
मैरेयमासवः सीधुर्मेदको जगलः समौ २०१२
संधानं स्यादभिषवः किण्वं पुंसि तु नग्नहूः २०१३
कारोत्तरः सुरामण्ड आपानं पानगोष्ठिका २०१४
चषकोऽस्त्री पानपात्रं सरकोऽप्यनुतर्षणम् २०१५
धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः २०१६
स्युर्लग्नकाः प्रतिभुवः सभिका द्यूतकारकाः २०१७

कादम्बरी,परिस्रुत् ,मदिरा,कश्यम् ,मद्यम् ,१३ मदिरा (जाँड् रक्सी)का नाम ॥ अवदंशः, १ मदिरा पिउँदा साथमा खाईने सितन निमकिन चना आदि चबाईनेको नाम ॥—शुण्डापानम् , मदस्थानम् , २ भट्टि ( रक्सी बनाउने घर )का नाम ॥—मधुवारः, मधुक्रमः, २ मदिरा पानगर्दा हुने छौंटकाट परिपाटि ( दशा )का नाम ॥—मध्वासवः, माधवकः, मधु, माध्वीकम् , ४ महुवाका रक्सीका नाम ॥—माध्वीकं मधु पुं. लिं.र नपुं.माछ ॥—मैरेयम् , आसवः, सीधुः, ३ उखु शाक आदिले बनायेका रक्सीका नाम ॥—मेदकः, जगलः, २ जाँडका कट ( छोक्रा )का नाम ॥—संधानम् , अभिषवः, २ मदिरा बनाउन अन्न आदि कुहाउने कामका नाम ॥—किण्वम् , नग्नहूः, २ जाँड रक्सी बनाउँदा हाल्नु पर्ने मसाला ( मर्चा )का नाम ॥ कारोत्तरः १ मदिराका माडको ( जाँड )को नाम ॥—आपानम् , पानगोष्ठिका, २ रक्सी पिउनेका जमाव ( डप्फा )का नाम ॥—चषकः, पानपात्रम् , २ मदिरा पिउने पस्कने भाँडा ( डवका ) ( प्याला )का नाम ॥—चषकः पुं. नपुं.माछ ॥—सरकः, अनुतर्षणम् , २ मदिरा पानका नाम ॥—धूर्तः, अक्षदेवी, कितवः, अक्षधूर्तः, द्यूतकृत् , ५ जुवाडेका नाम ॥

द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि २०१८
पणोऽक्षेषु ग्लहोऽक्षास्तु देवनाः पाशकाश्च ते २०१९
शारोऽक्षगुटिका शारिः शारिका सारिकेत्यपि ❀❀
परिणायस्तु शारीणां समन्तान्नयनेऽस्त्रियाम् २०२०
अष्टापदं शारिफलं प्राणिद्यूतं समाह्वयः २०२१
उक्ता भूरिप्रयोगत्वादेकस्मिन्येऽत्र यौगिकाः २०२२
ताद्धर्म्यादन्यतो वृत्तावूह्या लिङ्गान्तरेऽपि ते २०२३

१२. काण्डसमाप्तिः

इत्यमरसिंहकृतौ नामलिङ्गानुशासने २०२४
द्वितीयः काण्डो भूम्यादिः साङ्ग एव समर्थितः २०२५

---

—लग्नकः, प्रतिभूः, २ जमानी ( जमानत )का नाम ॥—सभिकाः, द्यूतकारकाः, २ जुवा खेलाउने ( खाल राख्ने )का नाम ॥—द्यूतः, अक्षवती, कैतवम्, पणः, ४ जूवाका नाम ॥—पणः, ग्लहः, २ च्याँखे थपनीका नाम ॥—अक्षः, देवनः, पाशकः, ३ पाशाका नाम ॥—शारः, अक्षगुटिका, शारिः, शारिका, सारिका, ५ गोटिका नाम ॥ परिणाय १ गोटी चालनाका नाम ॥—अष्टापदम्, शारिफलम्, २ थर्कीका नाम ॥—प्राणिद्यूतं समाह्वयः २ बट्टाई भेडा आदि लडायेर बाजी थाप्नाका नाम ॥ यो काण्ड र वर्गमा प्रायः पुंलिङ्ग प्रभृतिमा प्रयोग देखियेका यौगिक शब्द पुंलिङ्गी आदि देखियेतापनि योगार्थ लियेर अरु अरु लिङ्गमा पनी रहन शक्तछन् भनि जान्नु। अपि शब्दले गर्दा करण कुलाल आदि शब्द पनि पुंलिङ्ग स्त्रीलिङ्ग हुन शक्तछन् भन्ने कुरो जान्नु ॥

२०२४–२०२५ म अमरसिंहले बनायेका नामलिंगानुशासनमा भूमी आदि द्वितीयः कण्डः साङ्गोपाङ्ग एव समर्थितः कहियो ॥

इति श्री पं० द्वारिकानाथाचार्यात्मजस्य पं० शिवलालाचार्यस्य सुपुत्रेण शुक्लयजुर्वेदाचार्येण साहित्यवेदान्तशास्त्रिणा पं० बालकृष्णाचार्येण विरचितायां बालकृष्णाश्रम्यां नेपालीटीकायां द्वितीयः काण्डः समाप्तः ॥

# अथ—तृतीयं काण्डम्

१. वर्गभेदाः

विशेष्यनिघ्नैः संकीर्णैर्नानार्थैरव्ययैरपि २०२६
लिङ्गादिसंग्रहैर्वर्गाः सामान्ये वर्गसंश्रयाः २०२७

२. परिभाषा

स्त्रीदाराद्यैर्यद्विशेष्यं यादृशः प्रस्तुतं पदैः २०२८
गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः २०२९

---

२०२६-२०२७ सामान्य यो तृतीय काण्डमा, विशेष्यनिघ्न, संकीर्ण, नानार्थ, अव्यय लिङ्गादिसंग्रह इ ५ वर्ग कहिन्छन् ॥ विशेष्य वाचक शब्दका अधीनमा रहने अर्थात् विशेष्यवाचक शब्दको जुन् लिङ्ग छ त्यसैलिङ्गमा रहन्छन्—विशेष्यका अधीनमा रहन्छन् स्वतन्त्र छैनन् ॥ अरु वर्गको रीति ( परिभाषा ) तत्तत् वर्गमा लेखिनेछ ॥ यस वर्गका शब्दको प्रयोग गर्दा विशेष्यवाचक शब्दको लिङ्ग जुन्छ, त्यसैलिङ्गको रूप बनायेर प्रयोग गर्नु ॥ गुणिवाचक, द्रव्यवाचक, क्रियावाचक, शब्द जहाँसुकै पनि, विशेष्यबाचक शब्दको जुन् लिङ्गछ तेही लिङ्गमा रहन्छन् ॥

२०२८-२०२९ गुणविशिष्ट जस्तै सुकृतिनी स्त्री, सुकृतिनः दाराः, सुकृति कलत्रम्, यहाँ ३ तीनै रूपमा पुण्यात्मा स्त्री, यही अर्थ होता पनि स्त्री-वाचक शब्द क्रमैले स्त्रीलिङ्ग पुंलिङ्ग नपुंसक ३ लिङ्गमा रहेको हुनाले, सुकृति शब्द स्त्रीवाचक नभयेतापनि विशेष्य ( स्त्री ) वाचक स्त्री दार कलत्र शब्द बमोजिम क्रमैले तीन लिङ्गमा रह्यो ॥ द्रव्यविशिष्ट जस्तै दण्डि कुलम् , दण्डिनी स्त्री दण्डिनो दाराः, इत्यादि क्रिया विशिष्ट जस्तै पाचिका स्त्री, पाचकाः दाराः, पाचकम् कुलम् इत्यादि शब्द विशेष्यका अधीनमा रहन्छन् ॥

३. विशेष्यनिघ्नवर्गः

सुकृती पुण्यवान्धन्यो महेच्छस्तु महाशयः २०३०
हृदयालुः सुहृदयो महोत्साहो महोद्यमः २०३१
प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः २०३२
वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि २०३३
पूज्यः प्रतीक्ष्यः सांशयिकः संशयापन्नमानसः २०३४
दक्षिणीयो दक्षिणार्हस्तत्र दक्षिण्य इत्यपि २०३५
स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे २०३६
जैवातृकः स्यादायुष्मानन्तर्वाणिस्तु शास्त्रवित् २०३७
परीक्षकः कारणिको वरदस्तु समर्धकः २०३८
हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः २०३९

---

२०३०-२०५० सुकृती, पुण्यवान्, धन्यः, ३ भाग्यमानीका नाम ॥—महेच्छः, महाशयः, २ ठूलो इच्छा हुनेका नाम ॥—हृदयालुः, सुहृदयः, २ शुद्ध मन हुनेका नाम ॥—महोत्साहः, महोद्यमः, २ ठूलो उत्साह गर्नेका नाम ॥—प्रवीणः, निपुणः, अभिज्ञः, विज्ञः, निष्णातः, शिक्षितः, वैज्ञानिकः, कृतमुखः, कृती, कुशलः, १० सिपालुका नाम ॥—पूज्यः, प्रतीक्ष्यः, २ मान्नु पर्ने पूज्यका नाम ॥—सांशयिकः, संशयापन्नमानसः, २ सन्देह मान्नेका नाम ॥—दक्षिणीयः, दक्षिणार्हः, दक्षिण्यः, ३ दक्षिणा दिन योग्य (सत्पात्र)का नाम ॥—वदान्यः, स्थूललक्ष्यः, दानशौण्डः, बहुप्रदः, ४ धेरै दान गर्नेका नाम ॥—जैवातृकः, आयुष्मान्, २ पूरा (दीर्घायु) हुनेका नाम ॥—अन्तर्वाणिः, शास्त्रवित्, २ शास्त्र जान्नेका नाम ॥—परीक्षकः, कारणिकः, २ प्रमाणले अर्थ निश्चय गर्ने (परीक्षक)का नाम ॥—वरदः, समर्धकः २ वर (इच्छा) लागेको वस्तु दिनेका नाम ॥—हर्षमाणः, विकुर्वाणः, प्रमनाः, हृष्टमानसः, ४ प्रसन्न (खुशी) हुनेका नाम ॥

दुर्मना विमना अन्तर्मनाः स्यादुत्क उन्मनाः २०४०
दक्षिणे सरलोदारौ सुकलो दातृभोक्तरि २०४१
तत्परे प्रसितासक्ताविष्टार्थोद्युक्त उत्सुकः २०४२
प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः २०४३
गुणैः प्रतीते तु कृतलक्षणाहतलक्षणौ २०४४
इभ्य आढ्यो धनी स्वामी त्वीश्वरः पतिरीशिता २०४५
अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः २०४६
अधिकर्द्धिः समृद्धः स्यात् कुटुम्बव्यापृतस्तु यः २०४७
स्यादभ्यागारिकस्तस्मिन्नुपाधिश्च पुमानयम् २०४८
वराङ्गरूपोपेतो यः सिंहसंहननो हि सः २०४९
निर्वार्यः कार्यकर्ता यः संपन्नः सत्त्वसंपदा २०५०

---

—दुर्मनाः, विमनाः, अन्तर्मनाः, ३ दिक्‌दार ( व्याकुल चित्त हुने ) का नाम ॥—उत्कः, उन्मनाः, २ मन्लागेको कुरो हेर्न सुन्न हत्पताउनेका नाम ॥—दक्षिणः, सरलः, उदारः, ३ सोझो चित्त हुनेका नाम ॥—दातृभोक्तरि सुकलः १ दिने खानेको नाम ॥—तत्परः, प्रसितः, आसक्तः, ३ केही कार्यमा तत्पर हुनेका नाम ॥—इष्टार्थोद्युक्तः, उत्सुकः, २ अभिलषित वस्तुमा उद्योग गर्नेका नाम ॥—प्रतीतः, प्रथितः, ख्यातः, वित्तः, विज्ञातः, विश्रुतः, ६ प्रसिद्ध भयेका का नाम ॥—कृतलक्षणः, आहतलक्षणः, २ सौर्यादि गुणले प्रसिद्ध भयेकाका नाम ॥—इभ्यः, आढ्यः, धनी, ३ धनीका नाम ॥—स्वामी, ईश्वरः, पतिः, ईशिता, अधिभूः, नायकः, नेता, प्रभुः, परिवृढः, अधिपः, १० स्वामी ( मालिक ) का नाम ॥—अधिकर्द्धिः, समृद्धः, २ अधिक धन हुनेका नाम ॥—कुटुम्बव्यापृतः, अभ्यागारिकः, उपाधिः, ३ बहुकुटुम्बी ( जाहानियाँ )का नाम । वरैरङ्गरूपै-

अवाचि मूकोऽथ मनोजवसः पितृसंनिभः २०५१
सत्कृत्यालंकृतां कन्यां यो ददाति स कूकुदः २०५२
लक्ष्मीवाँल्लक्ष्मणः श्रीलः श्रीमान्स्निग्धस्तु वत्सलः २०५३
स्याद्दयालुः कारुणिकः कृपालुः सूरतः समाः २०५४
स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः २०५५
परतन्त्रः पराधीनः परवान्नाथवानपि २०५६
अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ २०५७
खलपूः स्याद्बहुकरो दीर्घसूत्रश्चिरक्रियः २०५८
जाल्मोऽसमीक्ष्यकारी स्यात्कुण्ठो मन्दः क्रियासु यः २०५९
कर्मक्षमोऽलंकर्मीणः क्रियावान्कर्मसूद्यतः २०६०

---

रुपेतो यः स सिंहसंहननः १ शरीर र रूप राम्रो हुनेको नाम ॥ निर्वार्य १ सुखदुःखमा समान रहेर स्वकर्तव्य पालन गर्नेको नाम ॥ अवाक्, मूकः, २ लाटाका नाम ॥—मनोजवसः, पितृसन्निभः, २ बाबू जस्तै छोराका नाम। आदरपूर्वकमलंकृतां कन्यां यो ददाति स कूकुदः १ शृङ्गार गरेकी कन्या विधि पूर्वक योग्यवरलाई दिनेको नाम ॥—लक्ष्मीवान्, लक्ष्मणः, श्रीलः, श्रीमान्, ४ धन र गृह सोभा प्रसस्त हुनेका नाम ॥—स्निग्धः वत्सलः, २ प्रेम गर्नेका नाम ॥—दयालुः, कारुणिकः, कृपालुः, सूरतः, ४ दयावान् ( दयागर्ने )का नाम ॥ स्वतन्त्रः, अपावृतः, स्वैरी, स्वच्छन्दः, निरवग्रहः, ५ आफु खुसीका नाम ॥—परतन्त्रः, पराधीनः, परवान्, नाथवान्, ४ परतन्त्र ( अर्काका अधीनमा रहने )का नाम ॥—अधीनः निघ्नः आयत्तः अस्वच्छन्दः, गृह्यकः ५ वशमा अधीनका नाम ॥—खलपूः, बहुकरः, २ खलो बढार्ने र साधारण झाडू बढारू गर्नेका नाम ॥— दीर्घसूत्रः, चिरक्रियः, २ दीर्घसूत्र ( जुंसा ) का नाम ॥—जाल्मः, असमीक्ष्य-कारी २ विचार नगरी काम गर्नेका नाम। यः क्रियासु मन्दः स कुण्ठः १

स कार्मः कर्मशीलो यः कर्मशूरस्तु कर्मठः २०६१
भरण्यभुक्कर्मकरः कर्मकारस्तु तत्क्रियः २०६२
अपस्नातो मृतस्नात आमिषाशी तु शौष्कलः २०६३
बुभुक्षितः स्यात्क्षुधितो जिघत्सुरशनायितः २०६४
परान्नः परपिण्डादो भक्षको घस्मरोऽद्मरः २०६५
आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते २०६६
उभौ त्वात्मंभरिः कुक्षिंभरिः स्वोदरपूरके २०६७
सर्वान्नीनस्तु सर्वान्नभोजी गृध्नुस्तु गर्धनः २०६८
लुब्धोऽभिलाषुकस्तृष्णक्समौ लोलुपलोलुभौ २०६९
सोन्मादस्तून्मदिष्णुः स्यादविनीतः समुद्धतः २०७०

---

काम झट्ट गर्न न शक्नेको नाम ।।—कर्मक्षमः, अलंकर्मीणः, २ सहजैले काम पत्ते गर्नेका नाम ।।—क्रियावान् १ काममा लागी रहनेको नाम ।।—कार्मः, कर्मशीलः, २ काम गरी रहने स्वभाववालाका नाम ।। कर्मशूरः, कर्मठः, २ काममा शूरिनेका नाम ।।—भरण्यभुक्, कर्मकरः, २ ज्याला (वेतन) लियेर काम गर्ने खेतालाका नाम ।। कर्मकारः १ विना वेतन काम गर्नेका नाम ।।—अपस्नातः, मृतस्नातः, २ खल्को हाल्नेका नाम ।।—आमिषाशी, शौष्कलः, २ माछा मासु खानेका नाम ।।—बुभुक्षितः, क्षुधितः, जिघत्सुः, अशनायितः, ४ भोकायेकाका नाम ।।—परान्नः, परपिण्डादः, २ आर्काका अन्नले जीविका गर्नेका नाम ।।—भक्षकः, घस्मरः, अद्मरः, ३ खञ्चुवाका नाम ।।—आद्यूनः, औदरिकः, १ पेटमात्र पाल्न पाये पुग्ने विशेष उन्नति नगर्नेका नाम ।।—आत्मंभरिः, कुक्षिंभरिः, २ आफ्नु पेटभर्नपाये पुग्ने आर्काको वास्ता नगर्नेका नाम ।। सर्वान्नीनः, सर्वान्नभोजी, २ सबैको अन्न खानेका नाम ।। गृध्नुः गर्धनः, लुब्धः, अभिलाषुकः, तृष्णक्, ५ लोभीका नाम ।।—लोलुपः लोलुभः, २ ज्यादा लोभीका नाम ।।–

मत्ते शौण्डोत्कटक्षीबाः कामुके कमिताऽनुकः २०७१
कम्रः कामयिताऽभीकः कमनः कामनोऽभिकः २०७२
विधेयो विनयग्राही वचनेस्थित आश्रवः २०७३
वश्यः प्रणेयो निभृतविनीतप्रश्रिताः समाः २०७४
धृष्टे धृष्णग्वियातश्च प्रगल्भः प्रतिभान्विते २०७५
स्यादधृष्टे तु शालीनो विलक्षो विस्मयान्विते २०७६
अधीरे कातरस्त्रस्ते भीरुभीरुकभीलुकाः २०७७
आशंसुराशंसितरि गृहयालुर्ग्रहीतरि २०७८
श्रद्धालुः श्रद्धया युक्ते पतयालुस्तु पातुके २०७९
लज्जाशीलेऽपत्रपिष्णुर्वन्दारुरभिवादके २०८०

---

सोन्मादः, उन्मदिष्णुः, २ उन्मादवाला ( पागल ) का नाम ॥—अविनीतः, समुद्धतः, २ अविनीतः ( उद्धत ठाडा )का नाम ॥—मत्तः, शौण्डः, उत्कटः, क्षीबः, ४ मत्त ( भाङ् रक्सी प्रभृतिले वेहोस-भयेका )का नाम ॥—कामुकः, कमिता, अनूकः, कम्रः, कामयिता, अभीकः, कमनः, कामनः, अभिकः, ६ कामी ( स्त्रीमालम्पट )का नाम ॥—विधेयः, विनयग्राही, वचनेस्थितः, आश्रवः, ४ अह्रायेको मान्नेका नाम ॥—वश्यः, प्रणेयः, २ वसमा पर्नेका नाम ॥—निभृतः, विनीतः, प्रश्रितः, ३ नम्रका नाम ॥—धृष्टः, धृष्णक्, वियातः, ३ धृष्ट ढिढाका नाम ॥—प्रगल्भः, प्रतिभान्वितः, २ बखतमा बुद्धि फुर्नेका नाम ॥—अधृष्टः, शालीनः, २ अधृष्ट ( धकाउने )का नाम ॥—विलक्षः, विस्मयान्वितः, २ आश्चर्य मान्नेका नाम ॥—अधीरः, कातरः २ कातरका नाम ॥—त्रस्तः भीरुः, भीरुकः, भीलुकः, ४ डरछेरूवाका नाम ॥—आशंसुः, आशंसिता, २ आसा ( उमेद ) गर्नेका नाम ॥—गृहयालुः, ग्रहीता, २ भनेको लिने ( ग्रहण ) गर्नेका नाम ॥—श्रद्धालुः १ श्रद्धा गर्नेको नाम ॥—पतयालुः, पातुकः, २ खस्ने ( गिर्नेका ) नाम ॥—लज्जाशीलः, अपत्रपिष्णुः, २ लज्जा मान्नेका

शरारुर्घातुको हिंस्रः स्याद्वर्धिष्णुस्तु वर्धनः २०८१
उत्पतिष्णुस्तूत्पतिताऽलंकरिष्णुस्तु मण्डनः २०८२
भूष्णुर्भविष्णुर्भविता वर्तिष्णुर्वर्तनः समौ २०८३
निराकरिष्णुः क्षिप्नुः स्यात् सान्द्रस्निग्धस्तु मेदुरः १०८४
ज्ञाता तु विदुरो विन्दुर्विकासी तु विकस्वरः २०८५
विसृत्वरो विसृमरः प्रसारी च विसारिणि २०८६
सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी २०८७
क्रोधनोऽमर्षणः कोपी चण्डस्त्वत्यन्तकोपनः २०८८
जागरूको जागरिता घूर्णितः प्रचलायितः २०८९
स्वप्नक्शयालुर्निद्रालुर्निद्राणशयितौ समौ २०९०

---

नाम ॥—वन्दारुः, अभिवादकः, २ श्रद्धापूर्वक ढोगनेका नाम ॥—शरारुः, घातुकः, हिंस्रः, ३ हिंसा गर्नेका नाम ॥—वर्धिष्णुः, वर्धनः, २ बढनेका नाम ॥—उत्पतिष्णुः, उत्पतिता, २ उफ्रनेका नाम ॥—अलंकरिष्णुः, मण्डनः, २ सिगारिनेका नाम ॥—भूष्णुः, भविष्णुः, भविता, ३ सप्रनेका नाम ॥—वर्तिष्णुः, वर्तनः, २ रहने ( खप्ने )का नाम ॥—निराकरिष्णुः, क्षिप्नुः, २ मिल्काउने ( फ्याक्ने )का नाम ॥ सान्द्रस्निग्धः मेदुरः २ खूब चिल्लाका नाम ॥—ज्ञाता, विदुरः, विन्दुः, ३ जान्नेका नाम ॥—विकासी, विकस्वरः, २ फुल्नेका नाम ॥—विसृत्वरः, विसृमरः, प्रसारी, विसारी, ४ फैलिनेका नाम ॥—सहिष्णुः, सहनः, क्षन्ता, तितिक्षुः, क्षमिता, क्षमी, ६ सहनेका नाम ॥—क्रोधनः, अमर्षणः, कोपी, ३ क्रोधी ( रिसाउने )का नाम ॥—चण्डः, अत्यन्तकोपनः, २ अतिक्रोधी ( अत्यन्त रिसाउने )का नाम ॥—जागरूकः, जागरिता, २ जागै रहनेका नाम ॥—घूर्णितः, प्रचलायितः, २ निद्रामा घुर्नेका नाम ॥—स्वप्नक्, शयालुः, निद्रालुः, ३ अति सुत्नेका नाम ॥—निद्राणः, शयितः, २ निधाउनेका नाम ॥—

पराङ्मुखः पराचीनः स्यादवाङप्यधोमुखः २०९१
देवानञ्चति देवद्र्यङ् विष्वद्र्यङ् विष्वगञ्चति २०९२
यः सहाञ्चति सध्र्यङ् स स तिर्यङ् यस्तिरोऽञ्चति २०९३
वदो वदावदो वक्ता वागीशो वाक्पतिः समौ २०९४
वाचोयुक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि २०९५
स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक् २०९६
दुर्मुखे मुखराबद्धमुखौ शक्लः प्रियंवदे २०९७
लोहलः स्यादस्फुटवाग्गर्ह्यवादी तु कद्वदः २०९८
समौ कुवादकुचरौ स्यादसौम्यस्वरोऽस्वरः २०९९
रवणः शब्दनो नान्दीवादी नान्दीकरः समौ २१००

---

पराङ्मुखः, पराचीनः, २ विमुख ( कंढो ) फर्काउनेका नाम ॥—अवाङ्, अधोमुखः, २ उँधोमुख गर्नेका नाम ॥ यो देवानञ्चति स देवद्र्यङ् १ देवताको पूजा गर्नेको नाम ॥ यो विष्वगञ्चति स विष्वद्र्यङ् १ चारैतिर लाग्नेको नाम ॥ यः सहाञ्चति स सध्र्यङ् १ सँग लाग्नेको नाम ॥—यस्तिरोऽञ्चति स तिर्यङ् १ तेर्सो हिड्नेको नाम ॥—वदः, वदावदः, वक्ता, ३ वक्ता ( बोलक्कड )का नाम ॥—वागीशः, वाक्पतिः, २ उचित बोल्नेका नाम ॥—वाचोयुक्तिपटुः, वाग्मी, २ खूब असल बोल्नेका नाम ॥—वावदूकः, अतिवक्ता, २ धेरै बोल्नेका नाम ॥—जल्पाकः, वाचालः, वाचाटः, बहुगर्ह्यवाक्, ४ तथ्य कुरो नजानी धेरै बोल्नेका नाम ॥—दुर्मुखः, मुखरः, अबद्धमुखः, ३ दुर्मुखा ( कच्कचे )का नाम ॥—शक्लः, प्रियंवदः, २ प्रिय ( मिठो बोल्ने )का नाम ॥—लोहलः, अस्फुटवाक्, २ अक्षर खायेर अस्पष्ट बोल्नेका नाम ॥—गर्ह्यवादी, कद्वदः, २ नजाति ( नराम्रो ) बोल्नेका नाम ॥—कुवादः, कुचरः, २ आर्काको ( बत्खोई ) गरेर बोल्नेका नाम ॥—असौम्यस्वरः, अस्वरः, २ रूखो नमीठो स्वर हुनेका नाम ॥—

जडोऽज्ञ एडमूकस्तु वक्तुं श्रोतुमशिक्षिते २१०१
तूष्णींशीलस्तु तूष्णीका नग्नोऽवासा दिगम्बरे २१०२
निष्कासितोऽवकृष्टः स्यादपध्वस्तस्तु धिक्कृतः २१०३
आत्तगर्वोऽभिभूतः स्याद्दापितः साधितः समौ २१०४
प्रत्यादिष्टो निरस्तः स्यात् प्रत्याख्यातो निराकृतः २१०५
निकृतः स्याद्विप्रकृतो विप्रलब्धस्तु वञ्चितः २१०६
मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः २१०७
अधिक्षिप्तः प्रतिक्षिप्तो बद्धे कीलितसंयतौ २१०८
आपन्न आपत्प्राप्तः स्यात् कांदिशीको भयद्रुतः २१०९

---

रवणः, शब्दनः, २ सामान्य शब्द गर्नेका नाम ॥—नान्दीवादी, नान्दीकरः, २ मङ्गल वचन बोल्नेका नाम ॥—जडः, अज्ञः, २ जड् ( पट्मूर्ख )का नाम ॥ एडमूकः १ बोल्न सुन्न नजान्ने लाटो बहिराको नाम ॥—तूष्णींशीलः, तूष्णीकः, २ चुप् लाग्नेका नाम ॥—नग्नः, अवासाः, दिगम्बरः, ३ नङ्गा ( नाङ्गा )का नाम ॥—निष्कासितः, अवकृष्टः, २ लगायेका कामबाट निकालियेकाका नाम ॥—अपध्वस्तः, धिक्कृतः, २ धिक्कार पायेका ( झपारियेका )का नाम ॥—आत्तगर्वः, अभिभूतः, २ घमण्ड तोडियेका-का नाम ॥—दापितः, साधितः, २ दिलाईयेकाका नाम ॥—प्रत्यादिष्टः, निरस्तः, प्रत्याख्यातः, निराकृतः, ४ प्रत्याख्यान ( स्वीकार ) नगरियेकाका नाम ॥—निकृतः, विप्रकृतः, २ अपकार गरियेकाका नाम ॥—विप्रलब्धः, वञ्चितः, २ ठगियेकाका नाम ॥—मनोहतः, प्रतिहतः, प्रतिबद्धः, हतः, ४ आफ्नु कार्य असफलभै हिस्स ( डिच्च ) पर्नेका नाम ॥—अधिक्षिप्तः, प्रतिक्षिप्तः, २ झौंटियेकाका नाम ॥—बद्धः, कीलितः, संयतः, ३ बाँधियेका-का नाम ॥—आपन्नः, आपत्प्राप्तः, २ आपत्तिमा पर्नेका नाम ॥—कांदि-शीकः, भयद्रुतः, २ डरले आत्तियेका ( कता जाँउँ कता जाँउँ ) भयेकाका

आक्षारितः क्षारितोऽभिशस्ते संकसुकोऽस्थिरे २११०
व्यसनार्तोपरक्तौ द्वौ विहस्तव्याकुलौ समौ २१११
विक्लवो विह्वलः स्यात्तु विवशोऽरिष्टदुष्टधीः २११२
कश्यः कशार्हे संनद्धे त्वाततायी वधोद्यते २११३
द्वेष्ये त्वक्षिगतो वध्यः शीर्षच्छेद्य इमौ समौ २११४
विष्यो विषेण यो वध्यो मुसल्यो मुसलेन यः २११५
विश्विदानोऽकृष्णकर्मा चपलश्चिकुरः समौ २११६
दोषैकदृक् पुरोभागी निकृतस्त्वनृजुः शठः २११७
कर्णेजपः सूचकः स्यात् पिशुनो दुर्जनः खलः २११८

---

नाम ।।—आक्षारितः, क्षारितः, अभिशस्तः, ३ समाजमा गर्हित वातलागेका-का नाम ।।—संकसुकः, अस्थिरः, २ अस्थिर ( चञ्चल ) चित्त हुनेका नाम ।।—व्यसनार्तः, उपरक्तः, २ दैवलागेर मानिसले गर्दा आजीत पीडित भयेकाका नाम ।।—विहस्तः, व्याकुलः, २ शोकादिले व्याकुल भयेकाका नाम ।।—विक्लवः, विह्वलः, २ शोकादिले गलेकाका नाम ।।—विवशः, अरिष्टदुष्टधीः, २ मरण नजीक आयेर अहमँत्यैलागेकाका नाम ।।—कश्यः, कशार्हः, २ कोराठोक्नलायकका नाम ।। आततायी १ मार्न लायक आततायीका नाम ।।—अग्निदोगरदश्चैव शस्त्रपाणिधनापहः । क्षेत्र-दारहरश्चैव षडेते आततायिनः ।। ई ६ आततायि कहिन्छन् ।।—द्वेष्यः, अक्षिगतः, २ रिसगरियेकाका नाम ।।—वध्यः, शीर्षच्छेद्यः, २ मार्नलायक-का नाम ।।—यो विषेण वध्यः स विष्यः १ बिषः खवायेर मार्नलायकको नाम ।। यो मुसलेन वध्यः स मुसल्यः १ मुसलले ठोकेर मार्नलायकको नाम ।।—शिश्विदानः, अकृष्णकर्मा, २ पुण्य गर्नेका नाम ।।—चपलः, चिकुरः, २ चट्पटेका नाम ।।—दोषैकदृक्, पुरोभागी, २ खोट्लाउनेका नाम ।।—निकृतः, अनृजुः, शठः, ३ दूषित अन्तकरण हुने ( शट कपटि

नृशंसो घातुकः क्रूरः पापो धूर्तस्तु वञ्चकः २११९
अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः २१२०
कदर्ये कृपणक्षुद्रकिंपचानमितंपचाः २१२१
निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः २१२२
वनीयको याचनको मार्गणो याचकार्थिनौ २१२३
अहंकारवानहंयुः शुभंयुस्तु शुभान्वितः २१२४
दिव्योपपादुका देवा नृगवाद्या जरायुजाः २१२५
स्वेदजाः कृमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः २१२६
उद्भिदस्तरुगुल्माद्या उद्भिदुद्भिज्जमुद्भिदम् २१२७

---

वद्मास ) का नाम ॥—कर्णेजपः, सूचकः, २ काने खुसीगरी अर्काको अपवाद गर्नेका नाम ॥—पिशुनः, दुर्जनः, खलः, ३ छुल्याहाका नाम ॥ —नृशंसः, घातुकः, क्रूरः, पापः, ४ अर्काको द्रोह ( विगार ) गर्नेका नाम ॥—धूर्तः, वञ्चकः, २ ठगका नाम ॥—अज्ञः, मूढः, यथाजातः, मूर्खः, वैधेयः, बालिशः, ६ मूर्खका नाम ॥—कदर्यः, कृपणः, क्षुद्रः, किंपचानः, मितंपचः, ५ कंजुस् कृपणी ( क्षुद्र )का नाम ॥—निःस्वः, दुर्विधः, दीनः, दरिद्रः, दुर्गतः, ५ कंगालोका नाम ॥—वनीयकः, याचनकः, मार्गणः, याचकः, अर्थी, ५ माग्नेका नाम ॥—अहंकारवान्, अहंयुः, २ अहंकारी ( घमण्डी )का नाम ॥—शुभंयुः, शुभान्वितः, २ कल्याण चिताउनेका नाम ॥ दिव्योपपादुका १ देवयोनि ( देवता )को नाम ॥—जरायुजाः १ साल नालले युक्तभै जन्मने मानिस गाईभैसी घोड़ा आदिको नाम ॥—स्वेदजाः, १ भूस्वेद जमीन आदिको गर्मी पसिनावाट पैदा हुने कमिला डाँस उडुस जंरा आदिको नाम ॥ अण्डजाः १ फूलवाट जन्मने पक्षी सर्प आदिको नाम ॥ इति विशेष्यतिघ्नान्तरगतः प्राणिवर्गः । अथ स्थावर वर्गः ॥—उद्भित्, उद्भिजम्, उद्भिदम्, ३ पृथिवीमा उम्रने तृण आदिका

सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् २१२८
कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् २१२९
तदासेचकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् २१३०
अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् २१३१
निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः २१४२
कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः २१३३
मलीमसं तु मलिनं कच्चरं मलदूषितम् २१३४
पूतं पवित्रं मेध्यं च वीध्रं तु विमलार्थकम् २१३५
निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम् २१३६
असारं फल्गु शून्यं तु वशिकं तुच्छरिक्तके २१३७
क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः २१३८
मुख्यवर्यवरेण्याश्च प्रवर्होऽनवरार्ध्यवत् २१३९

---

नाम ।।—सुन्दरम्, रुचिरम्, चारु, सुषमम्, साधु, शोभनम्, कान्तम्, मनोरमम्, रुच्यम्, मनोज्ञम्, मञ्जु, मञ्जुलम्, १२ राम्राका नाम ।।—आसेचनकं १ हेर्दा नअघाईने अति राम्राका नाम ।।—अभीष्टम्, अभीप्सितम्, हृद्यम्, दयितम्, वल्लभम्, प्रियम्, ६ प्यारा चिजका नाम ।।—निकृष्टः, प्रतिकृष्टः, अर्वा, रेफः, याप्यः, अवमः, अधमः, कुपूयः, कुत्सितः, अवद्यः, खेटः, गर्ह्यः, अणकः, १३ घटिया (अधम)का नाम ।।—मलीमसम्, मलिनम्, कच्चरम्, मलदूषितम्, ४ मैलाका नाम ।।—पूतम्, पवित्रम्, मेध्यम्, ३ पवित्र (शुद्ध)का नाम ।।—वीध्रम्, विमलम्, २ निर्मल (सफा)का नाम ।।—निर्णिक्तम्, शोधितम्, मृष्टम्, निःशोध्यम्, अनवस्करम्, ५ शुद्ध सफा सुग्घ पारियेकाका नाम ।।—असारम्, फल्गु, २ केही सार सत्व नभयेकाका नाम ।।—शून्यम्, वशिकम्, तुच्छम्, रिक्तकम्, ४ खाली (रित्ता)का नाम ।।—प्रधानम्, प्रमुखः, प्रवेकः

पराध्र्याग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम् २१४०
श्रेयान् श्रेष्ठः पुष्कलः स्यात् सत्तमश्चातिशोभने २१४१
स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः २१४२
सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः २१४३
अप्राग्र्यं द्वयहीने द्वे अप्रधानोपसर्जने २१४४
विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् २१४५
वड्रोरुविपुलं पीनपीव्नी तु स्थूलपीवरे २१४६
स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु २१४७
स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाणवः २१४८
अत्यल्पेऽल्पिष्ठमल्पीयः कनीयोऽणीय इत्यपि २१४९
प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु २१५०

---

अनुत्तमः, उत्तमः, मुख्यः, वर्यः, वरेण्यः, प्रवर्हः, अनवराध्र्यः, पराध्र्यः, अग्रः, प्राग्रहरः, प्राग्र्यः, अग्र्यः, अग्रीयः, अग्रियः, १७ मुख्य (प्रधान) का नाम ॥ प्रधानं नित्य नपुंसकमाछ ॥ श्रेयान्, श्रेष्ठः, पुष्कलः, सत्तमः, अतिशोभनः, ५ अति असलका नाम ॥—व्याघ्रः, पुंगवः, ऋषभः, कुञ्जरः, सिंहः, शार्दूलः, ई ६ र इत्यादि अरू पनि शब्द समासमा उत्तरपदभयेमा श्रेष्ठार्थ बोधक हुन्छन् पुंलिङ्गमा छन् एक्लैभयेमा आफ्नु अर्थबोधक हुन्छन् ॥ अप्राग्र्यम्, अप्रधानम्, उपसर्जनम्, ३ अमुख्यका नाम । अप्रधानोपसर्जने नपुंसकमाछन् ॥—विशङ्कटम्, पृथु, बृहत्, विशालम्, पृथुलम्, महत्, वड्रम्, उरु, विपुलम्, ९ ठूला ( फैलावट )का नाम ॥—पीनम्, पीव, स्थूलम्, पीवरम्, ४ मोटाका नाम ॥—स्तोकः, अल्पः, क्षुल्लकः, ३ सानाका नाम ॥—सूक्ष्मम्, श्लक्ष्णम्, दभ्रम्, कृशम्, तनु, मात्रा, त्रुटिः, लवः, लेशः, कणः, अणुः ११ साह्रैसानाका नाम । मात्रात्रुटि स्त्रीलिङ्गमाछन् । लवादिः पुंमाछन् ॥—अल्पिष्ठम्, अल्पीयः, कनीयः, अणीयः, ४ अत्यन्त सानाका

पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च २१५१
परःशताद्यास्ते येषां परा संख्या शतादिकात् २१५२
गणनीये तु गणेयं संख्याते गणितमथ समं सर्वम् २१५३
विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम् २१५४
समग्रं सकलं पूर्णमखण्डं स्यादनूनके २१५५
घनं निरन्तरं सान्द्रं पेलवं विरलं तनु २१५६
समीपे निकटासन्नसंनिकृष्टसनीडवत् २१५७
सदेशाभ्याशसविधसमर्यादसवेशवत् २१५८
उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम् २१५९
संसक्ते त्वव्यवहितमपदान्तरमित्यपि २१६०
नेदिष्ठमन्तिकतमं स्याद्दूरं विप्रकृष्टकम् २१६१

---

नाम ॥—प्रभूतम्, प्रचुरम्, प्राज्यम्, अदभ्रम्, बहुलम्, बहु, पुरुहूः, पुरु, भूयिष्ठम्, स्फारम्, भूयः, भूरि, ११ धेरैका नाम। परःशताः, १ सय भन्दा बढताको नाम ॥ परःसहस्राः १ हजार भन्दा बढताको नाम ॥—गणनीयम्, गणेयम्, २ गन्न सकिने गन्नु पर्नेका नाम ॥—संख्यातम्, गणितम्, २ गनियेकाका नाम ॥—समम्, सर्वम्, विश्वम्, अशेषम्, कृत्स्नम्, समस्तम्, निखिलम्, अखिलम्, निशेषम्, समग्रम्, सकलम्, पूर्णम्, अखण्डम्, अनूनकम्, १४ सबै ( निशेषका ) नाम ॥ घनम्, निरन्तरम्, सान्द्रम्, ३ घनीभूत ( बाक्लाका )का नाम ॥—पेलवम्, विरलम्, तनु, ३ पातलाका नाम ॥—समीपः, निकटः, आसन्नः, सन्निकृष्टः, सनीडः, सदेशः, अभ्याशः, सविधः, समर्यादः, सवेशः, उपकण्ठः, अन्तिकः, अभ्यर्णः, अभ्यग्रः, अभितः, १५ समीप ( नगीचका ) नाम। अभित अव्ययमा छ ॥—संसक्तम्, अव्यवहितम्, अपदान्तरम्, ३ संयुक्त ( जोरियेकाका ) नाम ॥—नेदिष्ठम्, अन्तिकतम्, २ साह्रै नगीचका नाम ॥—दूरम्,

दवीयश्च दविष्ठं च सुदूरं दीर्घमायतम् २१६२
वर्तुलं निस्तलं वृत्तं बन्धुरं तून्नतानतम् २१६३
उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गेऽथ वामने २१६४
न्यङ्नीचखर्वह्रस्वाः स्युरवाग्रेऽवनतानतम् २१६५
अरालं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम् २१६६
आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि २१६७
ऋजावजिह्मप्रगुणौ व्यस्ते त्वप्रगुणाकुलौ २१६८
शाश्वतस्तु ध्रुवो नित्यसदातनसनातनाः २१६९
स्थास्नुः स्थिरतरः स्थेयानेकरूपतया तु यः २१७०
कालव्यापी स कूटस्थः स्थावरो जङ्गमेतरः २१७१
चरिष्णु जङ्गमचरं त्रसमिङ्गं चराचरम् २१७२

---

विप्रकृष्टकम्, २ टाढाका नाम ॥—दवीयः, दविष्ठम्, सुदूरम्, ३ साह्रै टाढाका नाम। दीर्घम्, आयतम्, २ लामाका नाम ॥—वर्तुलम्, निस्तलम्, वृत्तम्, ३ बाटुलाका नाम। उन्नतानतं, बन्धुरं २ ऊचा निचाका नाम ॥-उच्च, प्रांशुः, उन्नतः, उदग्रः, उच्छ्रितः, तुङ्गः, ६ अग्लाका नाम ॥-वामनः, न्यक्, नीचः, खर्वः, ह्रस्वः, ५ होचाका नाम ॥—अवाग्रम्, अवनतम्, आनतम्, ३ घोप् टियेकाका नाम ॥—अरालम्, वृजिनम्, जिह्मम्, ऊर्मिमत्, कुञ्चितम्, नतम्, आविद्धम्, कुटिलम्, भुग्नम्, वेल्लितम्, वक्रम्, ११ बाङ्गा ( टेढाका ) नाम ॥—ऋजुः, अजिह्मः, प्रगुणः, ३ सोझाका नाम ॥—व्यस्तः, अप्रगुणः, आकुलः, ३ मिसियेका ( छास मिसभयेकाका नाम ॥—शाश्वतः, ध्रुवः, नित्यः, सदातनः, सनातनः, ५ नित्य ( सँधै रहनेका ) नाम ॥—स्थास्नुः, स्थिरतरः, स्थेयान्, ३ अति-स्थिर ( टिकाउका ) नाम। य एकरूपतया कालव्यापी स कूटस्थः १ सँधै

चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम् २१७३
चञ्चलं तरलं चैव पारिप्लवपरिप्लवे २१७४
अतिरिक्तः समधिको दृढसंधिस्तु संहतः २१७५
कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम् २१७६
जरठं मूर्तिमन्मूर्तं प्रवृद्धं प्रौढमेधितम् २१७७
पुराणे प्रतनप्रत्नपुरातनचिरंतनाः २१७८
प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः २१७९
नूत्नश्च सुकुमारं तु कोमलं मृदुलं मृदु २१८०
अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम् २१८१
प्रत्यक्षं स्यादैन्द्रियकमप्रत्यक्षमतीन्द्रियम् २१८२

---

एक नास रहनेको नाम ॥—स्थावरः, जङ्गमेतरः, २ स्थावर ( नचल्ने वृक्षादि )का नाम ॥—चरिष्णु, जङ्गमम्, चरम्, त्रसम्, इङ्गम्, चराचरम्, ६ चर ( चल्ने ) मनुष्यादिको नाम ॥—चलनम्, कम्पनम्, कम्प्रम्, ३ चञ्चल ( चलने हल्लने )का नाम ॥—चलम्, लोलम्, चलाचलम्, चञ्चलम्, तरलम्, पारिप्लवम्, परिप्लवम्, ७ चलने ( चञ्चल )का नाम ॥—अतिरिक्तः, समधिकः, २ अर्घेला ( बढता )का नाम ॥—दृढसंधिः, संहतः, २ दृढसंधि ( खूबजोरियेकाका ) नाम ॥—कर्कशम्, कठिनम्, क्रूरम्, कठोरम्, निष्ठुरम्, दृढम्, जरठम्, मूर्तिमत्, मूर्तम्, ९ कठोर ( साह्रा ) का नाम ॥ प्रवृद्धम्, प्रौढम्, एधितम्. ३ बढेकाका नाम ॥—पुराणम्, प्रतनम्, प्रत्नम्, पुरातनम्, चिरन्तनम्, ५ पुरानाका नाम ॥—प्रत्यग्रः, अभिनवः, नव्यः, नवीनः, नूतनः, नवः, नूत्नः, ७ ताजा नयाँका नाम ॥—सुकुमारम्, कोमलम्, मृदुलम्, मृदु, ४ मुलायम ( नरम ) कमला,का नाम ॥—अन्वक्, अन्वक्षम्, अनुगम्, अनुपदम्, ४ पछाडीका नाम। अनुपदं नपुंमा र अव्ययमा पनिछ ॥—प्रत्यक्षम्, ऐन्द्रियकम्, २ प्रत्यक्ष-

एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि २१८३
अप्येकसर्ग एकाग्र्योऽप्येकायनगतोऽपि सः २१८४
पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्या अथास्त्रियाम् २१८५
अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमाः २१८६
मोघं निरर्थकं स्पष्टं स्फुटं प्रव्यक्तमुल्बणम् २१८७
साधारणं तु सामान्यमेकाकी त्वेक एककः २१८८
भिन्नार्थका अन्यतर एकस्त्वोऽन्येतरावपि २१८९
उच्चावचं नैकभेदमुच्चण्डमविलम्बितम् २१९०
अरुंतुदं तु मर्मस्पृगबाधं तु निरर्गलम् २१९१
प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च २१९२
वामं शरीरं सव्यं स्यादपसव्यं तु दक्षिणम् २१९३

---

इन्द्रियले देखिने सुनिनेका नाम ॥ अप्रत्यक्षम्, अतीन्द्रियम्, २ अप्रत्यक्ष (इन्द्रियले नदेखिने नसुनिने धर्म आदिका) नाम ॥--एकतानः अनन्यवृत्तिः, एकाग्रः, एकायनः, एकसर्गः, एकाग्र्यः, एकायनगतः, ७ एकाग्रका नाम ॥—आदिः, पूर्वः, पौरस्त्यः, प्रथमः, आद्यः, ५ अघिल्ला (पहिला)का नाम ॥ आदिः पुं. मात्र ॥—अन्तः, जघन्यम्, चरमम्, अन्त्यम्, पाश्चात्यम्, पश्चिमम्, ६ पछिल्लाका नाम । अन्तः पुं. नपुं. मानैछ ॥—मोघम्, निरर्थकम्, २ व्यर्थ (बेकाम)का नाम ॥—स्पष्टम्, स्फुटम्, प्रव्यक्तम्, उल्बणम्, ४ स्पष्टका नाम ॥ साधारणम्, सामान्यम्, २ साधारण (मामूली)का नाम ॥—एकाकी, एकः, एककः, ३ एक्लाका नाम ॥—भिन्नः, अन्यतरः एकः, त्वः, अन्यः, इतरः, ६ भिन्न (आर्का)का नाम ॥—उच्चावचम्, नैकभेदम्, २ अनेकतरहका नाम ॥ उच्चण्डम्, अविलम्बितम्, २ अविलम्बका नाम ॥—अरुंतुदम्, मर्मस्पृक्, २ मर्म छेडनेका नाम ॥—अबाधम्, निरर्गलम्, २ बाधा (छेकथुन) नभयेका

संकटं ना तु संबाधः कलिलं गहनं समे २१९४
संकीर्णे संकुलाकीर्णे मुण्डितं परिवापितम् २१९५
ग्रन्थितं संदितं दृब्धं विसृतं विस्तृतं ततम् २१९६
अन्तर्गतं विस्मृतं स्यात् प्राप्तप्रणिहिते समे २१९७
वेल्लितप्रेङ्खिताधूतचलिताकम्पिता धुते २१९८
नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः २१९९
परिक्षिप्तं तु निवृतं मूषितं मुषितार्थकम् २२००
प्रवृद्धप्रसृते न्यस्तनिसृष्टे गुणिताहते २२०१
निदिग्धोपचिते गूढगुप्ते गुण्ठितरूषिते २२०२

---

छाडाका नाम ।। प्रसव्यम्, प्रतिकूलम्, अपसव्यम्, अपष्ठु, ४ प्रतिकूल ( विरोधी )का नाम । यद्वामं शरीरं तत् सव्यं १ बाँयाँ शरीरको नाम । यद्दक्षिणं शरीरं तत् अपसव्यं १ दाहिने शरीरको नाम ।।—संकटम्, संबाधः, २ भिड् ( घुँईचा )का नाम । संबाधः पुं. मात्र ।।—कलिलम्, गहनम्, २ गहन ( पस्न नसकिने )का नाम ।।—संकीर्णम्, संकुलम्, आकीर्णम्, ३ साँघुरो भयेका वस्तुका नाम ।।—मुण्डितम्, परिवापितम्, २ मुण्डन गरिसक्नेका नाम ।।—ग्रन्थितम्, संदितम्, दृब्धम्, ३ गुँथियेकाका नाम ।।—विसृतम्, विस्तृतम्, ततम्, ३ फैलियेकाका नाम ।।—अन्तर्गतम्, विस्मृतम्, २ बिर्सियेकाका नाम ।।—प्राप्तम्, प्रणिहितम्, २ पाईयेकाका नाम ।।—वेल्लितः, प्रेङ्खितः, आधूतः, चलितः, आकम्पितः, धुतः, ६ अलि अलि हल्लियेकाका नाम ।।—नुत्तः, नुन्नः, अस्तः, निष्ठ्यूतः, आविद्धः, क्षिप्तः, ईरितः, ७ मिल्कायेका ( फ्याँके )काका नाम ।। —परिक्षिप्तम्, निवृतम्, २ प्रखाल आदिले घेरियेकाका नाम ।।—मूषितम्, मुषितम्, २ चोरियेकाका नाम ।।—प्रवृद्धम्, प्रसृतम्, २ लम्केकाका नाम ।।—न्यस्तम्, निसृष्टम्, २ राखेका ( छोड़ियेका )का नाम ।।—

द्रुतावदीर्णे उद्गूर्णोद्यते काचितशिक्यिते २२०३
घ्राणघ्राते दिग्धलिप्ते समुदक्तोद्धृते समे २२०४
वेष्टितं स्याद्वलयितं संवीतं रुद्धमावृतम् २२०५
रुग्णं भुग्नेऽथ निशितक्ष्णुतशातानि तेजिते २२०६
स्याद्विनाशोन्मुखं पक्वं ह्रीणह्रीतौ तु लज्जिते २२०७
वृत्ते तु वृतव्यावृत्तौ संयोजित उपाहितः २२०८
प्राप्यं गम्यं समासाद्यं स्यन्नं रीणं स्नुतं स्रुतम् २२०९
संगूढः स्यात्संकलितोऽवगीतः ख्यातगर्हणः २२१०

---

गुणितम्, आहतम्, २ गुनियेकाका नाम ॥—निदिग्धम्, उपचितम्, २ बढेका पुष्ट भयेकाका नाम ॥—गूढम्, गुप्तम्, २ लुक्नेका नाम ॥—गुण्ठितम्, रूषितम्, २ पोतियेकाका नाम ॥—द्रुतम्, अवदीर्णम्, २ पग्लेकाका नाम ॥—उद्गूर्णम्, उद्यतम्, २ ऊजायेका हतियार आदिका नाम ॥—काचितम्, शिक्यितम्, २ शिखामा झुण्ड्यायेकाका नाम ॥—घ्राणम्, घ्रातम्, २ सुँघियेकाका नाम ॥—दिग्धम्, लिप्तम्, २ लेपियेका-का नाम ॥—समुदक्तम्, उद्धृतम्, २ उचालियेकाका नाम ॥—वेष्टितम्, वलयितम्, संवीतम्, रुद्धम्, आवृतम्, ५ घेरियेकाका नाम ॥—रुग्णम्, भुग्नम्, २ भाँचियेका नाम ॥—निशितम्, क्ष्णुतम्, शातम्, तेजितम्, ४ सान आदि लायेर धारिलो पारेका हतियार आदिका नाम ॥—विनाशो-न्मुखं, पक्वं, २ पाकेका ( नष्ट हुनै लागेका )का नाम ॥—ह्रीणः, ह्रीतः, लज्जितः, ३ लज्जायेकाका नाम ॥—वृत्तः, वृतः, व्यावृत्तः, ३ वरण गरेकाका नाम ॥—संयोजितः, उपाहितः, २ संयुक्त ( जोरियेकाका ) नाम ॥—प्राप्यम्, गम्यम्, समासाद्यम्, ३ प्राप्त गर्न सकिनेका नाम ॥—स्यन्नम्, रीणम्, स्नुतम्, स्रुतम्, ४ बगेका पानी आदिका नाम ॥—संगूढः, संकलितः, २ संग्रह ( जम्मा गरियेका ) अङ्कादिका नाम ॥—अवगीतः,

